अत्र त्रिभिः श्लोकैः त्रिवर्गाधिभूतजघनसिंहासनवर्णनमारभते—

**मध्येलावण्यपूरं घनजघनतटच्छद्मना पद्मनाभ-**
**स्योच्चैरुद्भासमानं पुलिनममलिनं चिन्त्यतां चक्रचारु ।**
**यस्मिन्विश्रम्य सम्यङ्मतिरतिचतुरा पारिकाङ्क्षीश्वराणां**
**पारं संसारसिन्धोः करकमलपरिप्राप्तकल्पं विवेद ॥ १३ ॥**

**मध्येलावण्येति** । मध्येलावण्यपूरं लावण्यपूरस्य लावण्यप्रवाहस्य मध्ये । 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः । पद्मनाभस्य श्रीनारायणस्य घनजघनतटच्छद्मना घनं निबिडं जघनमेव तटं तस्य छद्मना कपटेन । जघनं नाम नाभेरधोभागरूपमङ्गम् । 'क्लीबे तु जघनं पुरः' इत्यमरः । उद्भासमानं प्रतीयमानं जघनाभिन्नमिति यावत् । उच्चैरुन्नतमुभयत्र समानममलिनं लावण्यातिरेकात् । पुलिनपक्षे रत्नवालुकामयत्वेन देदीप्यमानं चक्रं रथाङ्गं तद्वच्चारु सुन्दरं वृत्तत्वात् । अन्यत्र चक्रैः चक्रवाकैः चारु तद्विहारस्थानत्वात् । 'चक्रं रथाङ्गम्' 'कोकश्चक्रश्चक्रवाकः' इति चामरः । ईदृशं पुलिनं तोयान्तर्गततटं तोयोत्थित-तटम् । 'तोयोत्थितं तत्पुलिनम्' इत्यमरः । अत्र जघनस्य व्याजापह्नुत्या पुलिनस्वरूपता-कथनाय पद्मनाभस्येत्यत्र श्रीदयाब्धेरिति वक्तुं युक्तम् । अथवा पद्मनाभस्य पद्मैः नाभा यस्य । नाभा शोभाभावः । न आभा यस्य तस्य । पद्मैः सहितस्य अर्थात् पद्माकरस्य 'सरिदुदधिगतं पङ्कजेन्दीवरादि' इत्युक्तरीत्या कस्यचित्समुद्रस्य पुलिनं चिन्त्यतां योग-निष्ठेन चिन्तितं भवतु । यस्मिञ्जघनपुलिने पारिकाङ्क्षीश्वराणां मुनिश्रेष्ठानाम् । 'पारिकाङ्क्षी वाचंयमो मुनिः' इत्यमरः । अतिचतुरा मतिः सम्यग्विश्रम्य विश्रामं कृत्वा मध्ये मध्ये विश्रान्तः सागरं सुखं तरति अविश्रम्य गतस्तु मज्जत्येवेति प्रसिद्धम् । एतदेव चातुर्यम् । ध्यानपक्षे 'जितं जितं स्थानमयोद्यधारयत्' इत्युक्तम् । मतिरिति स्त्रीलिङ्गं साम्यात् काचित्स्त्री तेन करकमलेति वक्ष्यमाणं संगच्छते । एतेन स्त्रियोपि सुतरः संसारः पुंसः किं वक्तव्यमिति जघनपुलिनविश्रान्तेराश्चर्यत्वमुक्तम् । तेन काव्यार्थापत्तिरपि व्यक्ता । संसारसिन्धोः पारं परतीरं । 'पारावारे परार्वाची तीरे' इत्यमरः । करकमलपरिप्राप्तकल्प-मीषदसमाप्तं करकमले परिप्राप्तं तत् । ईषदसमाप्त्यर्थे कल्पप्प्रत्ययः । करप्राप्तं सन्तं विवेद

ज्ञातवती। अत्रोक्तेन वस्तुना एकतमसमुद्रपुलिनगतेनापरसमुद्रस्तीर्यते इति असंगतिरलंकारश्च व्यज्यते। श्लेषरूपकयोः संकरः॥ १३॥

**सारं सन्नाभिशोभं द्युमणिगणलसत्तेजसा भ्राजमानं**
**श्रीकान्तस्यान्तरङ्गं जघनमिति मतं चक्रमन्यद्विचिन्त्यम्।**
**धारा सौदर्शनी सा जरठरिपुघटादुःसहा यत्सहाया**
**ग्रीवाग्राग्णि च्छिदायै भिदुरमदभिदि प्राभवत्कैटभीये॥ १४॥**

**सारमिति**। सारं सर्वोत्सृष्टं भगवदीयत्वात्। द्युमणिगणलसत्तेजसेत्यत्र पदार्थवृत्तिनिदर्शना। श्रीकान्तस्य श्रीनारायणस्य अन्तरङ्गं वस्त्राच्छन्नत्वात्। तदन्तर्वर्त्ति अङ्गं बहिरङ्गात्सुदर्शनात्। अन्यत् इतरत् अरैः चक्रावयवैः पिण्डिकानेमिलग्नैः सह वर्त्तमानं सारं सन्नाभिशोभं सती वर्त्तमाना निकटस्थिता नाभेः शोभा यस्मिंस्तत्। यद्वा अभितः शोभा अभिशोभा सन्ना विसरन्ती अभिशोभा यस्य तत्। अत्युज्ज्वलमित्यर्थः। अन्यत्र नाभिः पिण्डिका चक्रमध्यावयवः अक्षसंयोगस्थानम्। 'पिण्डिका नाभिः' इत्यमरः। द्युमणिगणलसत्तेजसा भ्राजमानम्। दिवोमणयः द्युमणयः दिव्या मणयः इत्यर्थः। ते तु काञ्चीगताः तेषां गणस्य लसता तेजसा दीप्त्या भ्राजमानमन्यत्र द्युमणिगणः सूर्यसमूहः तस्य लसता तेजसा इव तेजसा भ्राजमानं कोटिसूर्यप्रकाशत्वात्। जघनमिति यावत् मतं ख्यातम्। वस्तुतः चक्रवृत्तत्वेन सादृश्याद्विचिन्त्यं ध्येयं भक्तेनेति शेषः। व्याकरणशास्त्रे बहिरङ्गान्तरङ्गविध्योर्मध्ये अन्तरङ्गस्य बलीयस्त्वमिव अस्यान्तरङ्गचक्रस्य बलीयस्त्वमाह— धारेति। जरठरिपुघटादुःसहा जरठानां कठिनानां रिपूणां दैत्यानां घटा समूहः तस्या दुःसहा सोढुमशक्यापि। 'जरठः कठिने जीर्णे' इति विश्वः। सौदर्शनी सुदर्शनसंबन्धिनी धारा निशितं मुखं 'धारा सैन्ये द्रुमस्कन्धे खड्गादेर्निशिते मुखे' इति मेदिनी। यत्सहाया यज्ञघनचक्रं सहायं यस्याः तथाभूता सती। 'जरठरिपुघटादुःसहादःसहाया' इति पाठोनुप्रासे साधीयान्। भिदुरमदभिदि भिदुरस्य वज्रस्य मदः नैष्ठुर्यजगर्वः तस्य भेदके वज्रादपि निष्ठुरे कैटभीये कैटभस्य संबन्धिनि ग्रीवाग्राग्णि शिरोधिशिलायाम्। 'अथ ग्रीवायां शिरोधिः कन्धरेत्यपि' इत्यमरः। छिदायै छेदनाय प्राभवत् समर्थाभवत्। प्रपूर्वस्य भूधातोः समर्थाभिधानं धातूनामनेकार्थत्वात्। इतरशस्त्रधारा पाषाणं प्राप्य कुण्ठिता

भवति इयं तु सुदर्शनधारा जवनचक्रसाहाय्येन पर्वतभेदकवज्रादप्यतिनिष्ठुरस्य कैटभ-ग्रीवाग्राव्णः छेदने समर्था भवतीति सुदर्शनचक्रापेक्षया जवनचक्रस्याधिक्यमिति भावः । अत्र सारमित्यादिश्लोकोत्थापितो रूपकालङ्कारः । सुदर्शनस्य कैटभशिरश्छेदने जघनसाहाय्यम् । 'एवमुक्त्वा भगवता शङ्खचक्रगदाभृता । कृत्वा चक्रेण वै छिन्ने जघने शिरसी तयोः ॥' इति मार्कण्डेयपुराणवचनात् ॥ १४ ॥

**सज्जं सिंहासनं तज्जघनमनु मनः शान्तसाम्राज्यसुस्थं**
**स्थाप्यं यस्योपरिष्टाल्लसति सिततमं स्पष्टरोमालिदण्डम् ।**
**श्रीवत्सच्छत्रमारादपि मणिरशनाहारिहीराश्मरश्मि-**
**श्रेणिः प्रेङ्खन्मरालीविसृमरसुषमोड्डामरा चामराली ॥ १५ ॥**

**सज्जमिति ।** तज्जघनं तस्य जघनं सज्जं साम्राज्याभिषेकाय सोपाकरणतया स्थापितं सिंहासनं नृपासनं 'नृपासनं यत्तद्भद्रासनं सिंहासनं च तत्' इत्यमरः । तदनु तेन सह संबध्य 'तृतीयार्थे' इति अनोः कर्मप्रवचनीयस्य योगे द्वितीया । शान्तसाम्राज्यसुस्थं मनः स्थाप्यं तज्जघनस्य शान्त्या प्राप्यत्वात् । शान्तानां मध्ये यत्साम्राज्यं महाराजत्वं तेन सुस्थं सुस्थिरं मनः स्थाप्यं स्थापनीयं शुश्रूषुणेति शेषः । एतेन मनसो महाराजत्वं व्यक्तम् । सिंहासनस्य सज्जत्वमाह--यस्य उपरिष्टात् यस्योपरि स्पष्टरोमालिदण्डं स्पष्टः प्रकाशमानः रोमालिः एव दण्डः यस्य तत् । छत्रस्य कनकदण्डत्वं प्रसिद्धम् । अत्र रोमालिदण्डत्वेन इन्द्रनीलमणिदण्डत्वमायातम् । तच्च कनकदण्डत्वापेक्षया साम्राज्योत्कर्षसूचकम् । सिततममतिशुभ्रं श्रीवत्सच्छत्रं श्रीवत्साख्यं वक्षःस्थितं चिह्नमेव छत्रं लसति शोभते । आरादपि समीपेपि 'आराद्दूरसमीपयोः' इत्यमरः । मणिरशनाहारिहीराश्मरश्मिश्रेणिः मणि-मयकाञ्चीस्थितमनोहरहीरककिरणधोरणी प्रेङ्खन्मरालीविसृमरसुषमोड्डामरा प्रेङ्खन्त्या उड्डीय-मानाया मराल्याः हंस्याः अत्र उड्डीनत्वसाम्यम् । विसृमरा प्रसरन्ती या सुषमा परमशोभा तद्वत् उड्डामरा उत्कृष्टा चामराली चामरश्रेणी च लसति । उपरि श्वेतच्छत्रं श्रीपतेः समीपे चामराश्च । छत्रचामरयोः राजाऽसाधारणलक्षणत्वाद्द्वयमेव वर्णितम् । रूपका-लङ्कारः ॥ १५ ॥

अथ निरुपमत्वेनाद्वितीयस्य श्रीनारायणस्य मध्यभागवर्णनमेकेन श्लोकेनारभते—

**मध्यं चामुष्य काञ्चीमणिगणकिरणस्पष्टगम्भीरनाभी-**
**शोभं तद्गर्त्तगर्भोत्थितशितिभुजगीभ्रान्तिभृद्रोमलेखम् ।**
**कालिन्दीभङ्गभङ्गिप्रबलबलिकुलासन्नराजीवराजी-**
**पांशुस्तूपांसलत्विड्वसननिवसितं चिन्तनीयं तनीयः ॥ १६ ॥**

**मध्यं चेति ।** काञ्चीमणिगणकिरणस्पष्टगम्भीरनाभीशोभं काञ्चीमणिगणकिरणैः स्पष्टा गम्भीरनाभीशोभा यस्मिंस्तत् । तमःसंवृतस्य शोभाभावात् । तद्गर्त्तगर्भोत्थितशितिभुजगीभ्रान्तिभृद्रोमलेखं सैव नाभिरेव गर्त्तः तस्य गर्भान्मध्यादुत्थिता तमोनिरसनरशनामणिदीपोद्दीपिततादृशगभीरनाभिगर्त्ते स्थातुमशक्यत्वात्सर्पाणां सान्धकारबिलस्थितिप्रसिद्धेः । तद्गता या शितिभुजगी कालसर्पी 'शिती धवलमेचकौ' इत्यमरः । तद्भ्रान्तिभृत् तत्संदेहकारिणी रोमरेखा यस्मिंस्तत् । अत्र रूपकोत्थापितो भ्रान्तिमदलङ्कारः । कालिन्दीभङ्गानां यमुनातरङ्गाणां भङ्ग्या प्रकारेण प्रबलं यद्बलिकुलं बलयश्च अन्तरान्तरा निम्ना उच्छन्नमांसरेखाः महापुरुषलक्षणरूपाः तासां कुलं तस्य कालिन्दीभङ्गभङ्गिप्रबलत्वं नाम तादृशस्निग्धत्वोज्ज्वलत्वकोमलत्वादिभिस्तदभिन्नत्वं तत्रासन्ना प्रत्यक्षाभावादनुमानेन प्राप्ता या राजीवराजी पद्मश्रेणिः तस्या यः पांशुस्तूपः परागसमूहः । 'स्तूप विस्तारे' धातोर्घञ् । सर्वतो विस्तृतः पराग इति भावः । तद्वदंसला बलवती । अंशुलेति पाठे अंशुमती । उभयत्र अस्त्यर्थे लच् । त्विट् यस्य एतादृशं वसनम् । एतेन वसनस्य पीतत्वसूक्ष्मत्वस्निग्धत्वादिधर्मैः परागाभिन्नत्वं तेन निवसितमाच्छादितम् । 'वस आच्छादने' इति क्तप्रत्ययः । अत्रानुमानं 'वह्निव्याप्यधूमवानयं पर्वतः' इतिवत् । राजीवव्याप्यवसनाभिन्नतदीयपरागबलिकुलाभिन्नकालिन्दीभङ्गभङ्गिमिति अनुमानेन राजीवराजीनां तनीयः अतिशयेन तनु अतिकृशममुष्य प्रकृतस्य नारायणस्य मध्यम् । 'मध्यमं चावलग्नं च मध्योऽस्त्री' इत्यमरः । चिन्तनीयं चिन्ताविषयीकरणीयं ध्यायेदित्यर्थः । अत्र रूपकालङ्कारः ॥ १६ ॥

अथ त्रिगुणाविद्याशक्तिनिरसनतया पीताम्बरस्य वर्णनं त्रिभिः श्लोकैरारभते—

**स्फीतं पीताम्बरस्याम्बरमपि मनसा संस्तुवीतास्तसाम्यं**
**यत्तेजःपीतभावादितरकनकरुग्वस्तुनः पीतनाम ।**

**यस्याभ्यर्णे सुवर्णक्षितिधरशिखरक्षेपदक्षे समित्यां**
**वेपेते म्लान्युपेते बत पतगपतेस्त्रस्नुनी किं पतत्रे ॥ १७ ॥**

**स्फीतमिति** । अत्र यद्यपि वर्ण्यमानाङ्गभिन्नत्वेन वर्णनानर्हत्वं तथापि वसनं वसातिमित्युपक्रान्तत्वान्मध्योरुसमाच्छादकत्वेनाङ्गोपकारकाद्वर्णनमुचितम्। स्फीतमिति । पीताम्बरस्य श्रीनारायणस्य स्फीतं विस्तीर्णं स्फायधातोर्निष्ठायां स्फीतभावः । सर्वव्यापकस्य नारायणस्याप्याच्छादकत्वात् । अत एव अस्तसाम्यं निरुपममम्बरमपि वस्त्रमपि वस्त्रपर्यायबाहुल्येपि अम्बरत्वेन व्योमगतविभुत्वनित्यत्वादिकमम्बरस्य सूचितम् । मनसा संस्तुवीत मनसा स्तवनम् "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।" इति श्रुत्या सर्वव्यापकस्याच्छादकमिदं किं वर्णयामीति श्लाघनमेव एतादृशस्य सदा ध्यानमुचितमेवेति ध्यायेदिति तात्पर्यम् । स्तवने हेतुमाह—यत्तेजःपीतभावात् यस्याम्बरस्य तेजसा कान्त्या पीतभावात्पीतत्वादितरस्य पीताम्बरभिन्नस्य कनकरुग्वस्तुनः सुवर्णवर्णस्य द्रव्यस्य पीतनाम पीतमिति नाम भवतीति शेषः । लोके यद्यत्कनकादि पीतवस्तु वर्त्तते तत्तत्स्वतो न पीतं किन्तु नारायणस्य पीताम्बरपीतिम्नः संपर्कादेवेत्युत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद्गम्या । कनकादिपीतवस्तूनामम्बरकृतपीतिमासंबन्धेपि तत्संबन्धवर्णनादतिशयोक्तिः । सा चोत्प्रेक्षोत्थापिता । किं बहुना, यस्य अभ्यर्णे समीपे समित्यां युद्धे पुराणप्रसिद्धे मरुद्गणवद्विवादरूपे सुवर्णक्षितिधरशिखरक्षेपदक्षे पीतिम्ना सारेण च सुवर्णगिरेस्तिरस्कारके क्षेपके च तादृशेपि पतगपतेः गरुडस्य पतत्रे पक्षौ म्लान्युपेते म्लानिप्राप्ते अतएव त्रस्नुनी भीते सती उत्कृष्टसमीपे निकृष्टस्य त्रासात् । वेपेते किम् । उत्प्रेक्षा । बत खेदे । अहो सुमेरुशिखरदलनयोः गरुत्मद्गरुतोः भगवद्वसनसकाशे ईदृशं मालिन्यमिति वसनसकाशे गरुत्मद्गरुतोः वेगेनासंबन्धेपि तत्सम्बन्धवर्णनमतिशयोक्तिः सा च पूर्ववदुत्प्रेक्षोत्थापिता ॥ १७ ॥

**जम्बूजाम्बुस्रवन्ती तटकनककनत्पङ्कशङ्कां दधानं**
**सिद्धानां चेतसैशं वसनमनुसरेद्यत्सकाशे चकास्ति ।**
**काञ्चीमाणिक्यभौघो जघननिहतयोः प्राङ्मधोः कैटभस्य**
**प्रायस्तादृक्शिरोजाम्बवयुगलगलल्लोहिताम्बुप्रवाहः ॥ १८ ॥**

१ अम्भःप्रवाहः इति पाठष्टीकामनुसराति ।

**जम्भिवति** । सिद्धानां देवानां जम्बूनद्या इलावृतवर्षगतत्वात्तद्दर्शनीयत्वम्। जम्बूजानां जम्बूफलजानामम्बूनां 'बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्' इत्यमरः। स्रवन्ती नदी जम्बूनदी तस्याः तटयोः कनकरूपं कनद्दीप्यमानं यत्पङ्कं जम्बूनदीपङ्कस्य सुवर्णत्वं पुराणप्रसिद्धम्। अतएव जाम्बूनदमिति तस्य नाम । तच्छङ्कां दधानं भ्रान्तिमदलंकारः। ऐशमीशस्य नारायणस्य संबन्धि परिधानरूपं वसनं पीताम्बरं चेतसा अनुसरेद्ध्यायेदित्यर्थः। यत्सकाशे यत्समीपे काञ्चीमाणिक्यभौघः मेखलागतपद्मरागमणिकिरणसमूहः प्राक्सृष्ट्यादौ जघननिहतयोः जघनदेशे हननं प्राप्तयोः एतच्चण्डिकास्तोत्रे प्रसिद्धम् 'कृत्वा चक्रेण वै छिन्ने जघने शिरसी तयोः।' इति। मधोः कैटभस्य च । अत्र विशेषणस्य द्वित्वं मधुकैटभगतद्वित्वापेक्षया । तादृशी असाधारणे महती ये शिरसी ते एव जाम्बवे जम्बूफले जम्बूफलानां महत्त्वं श्रीभागवते 'इभकायनिभानामत्युच्चनिपातनशीर्णानामनस्थिप्रायाणाम्' इति। तयोः युगलाद्गलन्स्रवँल्लोहितान्येव अम्भःप्रवाहः शिरोगलितलोहिताभिन्नविशीर्णजम्बूफलरसालनिर्भरः प्रायः बाहुल्येन इवार्थो वा चकास्ति दीप्यते। जम्बूफलरसस्य शोणवर्णत्वाद्रक्तरूपत्वम् । अत्र पीताम्बरस्य जम्बूनदीतटकनकभ्रान्तेरनुप्राणनाय काञ्चीमाणिक्यकिरणस्य तन्मध्यगतत्वेन जघनहतमधुकैटभशिरोजाम्बवगलितरुधिरप्रवाहत्वेनोत्प्रेक्षा ॥ १८ ॥

**विस्पष्टं तद्वपुष्यावरणमनुगुणं लीढनीलाभ्रलीले**
**विक्षेपं चामरीचामरमृदुपवनेनात्मनाप्याददाते ।**
**स्वध्यातॄणां नृणां तद्द्वयमपनुदती जीवभावे निदानं**
**विद्युद्विद्योतहृद्ये हृदि वहतु हरेरन्तरीयोत्तरीये ॥ १९ ॥**

**विस्पष्टमिति** । लीढा भक्षिता नीलाभ्रस्य श्याममेघस्य लीला शोभा येन तस्मिन्। तद्वपुषि अनुगुणं गुणानुरूपं नीलगुणे पीतगुणस्य अतिशोभाधायकत्वान्नीलजलदोल्लसितविद्युत्प्रकाशसदृशमित्यर्थः। आवरणमाच्छादनं स्वकर्तृभगवत्कर्मकमित्यर्थः। विस्पष्टं प्रकाशमाददाने स्वीकुर्वाणे अमरीणां कमलाकिङ्करीणां देवीनां करधृतचामरीणां मृदुपवनेन विक्षेपं चलनं च अमरीचामरचालनानिलकर्तृकं स्वनिष्ठं विक्षेपमित्यर्थः । आददाने पीतस्यापि भगवदम्बरद्वयस्य चित्रतामाह——तयोः स्वतोऽविद्याशक्तिरूपावरणविक्षेपत्वेपि स्वध्यातॄणां

नृणां निजचिन्तकानां पीताम्बरसदृशस्य विष्णुपर्यायान्तःपठितत्वेन तद्वत्त्वं तस्यासाधारणधर्मः शङ्खचक्रादिवत् । अतो भगवद्ध्याने—'तडिद्वाससमच्युतम्' इति श्रुत्या तद्विशिष्टध्यानप्रतिपादनात्तद्ध्यानस्य भगवद्ध्यानतुल्यत्वादविद्याहरत्वम् । जीवभावे जीवत्वे निदानं कारणं तद्द्वयमावरणविक्षेपात्मकमविद्याशक्तिद्वयमपनुदति निराकुर्वति जीवो नाम मायया परिच्छिन्नानन्तप्रदेशेषु आवरणस्य चिदंशस्य जीवत्वापादकमेतज्ज्ञानरूपं शक्तिद्वयमित्यर्थः । विद्युद्विद्योतवद्धृद्ये मनोहरे हरेः श्रीनारायणस्य । अत्र अविद्यां हरतीति हरिरिति विशेष्यस्य स्वविशेषणीभूतान्तरीयोत्तरीययोरविद्याहरत्वाभिप्रायकत्वात्परिकरालङ्कारः । विक्षेपशक्तिमत्स्वविद्याभिधानेषु चित्प्रतिबिम्बः आवरणविक्षेपरूपं शक्तिद्वयं च विषयावरणरूपं ज्ञानरूपमेकविषयाश्रितं रज्ज्वादिसंभिन्नविक्षेपोपादानभूतं कार्यकलापं पुरुषाश्रितमन्यदिदमहं न जानामीति चिद्घनादीश्वरादविद्याप्रतिबिम्बिते अन्तरीयोत्तरीये परिधानोत्तरासङ्गरूपे वाससी भक्तः हृदि वहतु चिन्तयतु इत्यर्थः । 'अन्तरीयोपसंव्यानपरिधानान्यधोंशुके । संव्यानमुत्तरीयं च' इत्यमरः। अत्र पीताम्बरयोः आवरणरूपविक्षेपवत्त्वेपि तद्द्वयनाशकत्वाद्विरोधः । लीढनीलाभ्रशोभे विद्युद्विद्योतहृद्ये इत्यत्र उपमेति संकरः ॥ १९ ॥

अथ तापत्रयशमकस्य नाभिह्रदस्य वर्णनं त्रिभिः श्लोकैः प्रारभते—

**उन्मीलल्लोमलेखामृदुलनवलतामूलबद्धालवालं**
**धातुः सिद्धादिमस्यासुनियमनबिलं मूलपद्मालयस्य ।**
**संक्षिप्तानां स्वकुक्षौ किल लयसमये पिष्टपानां प्रवेश-**
**द्वारं नाभिं गभीरां भुवनभयभिदश्चिन्तयेच्चेतसोन्तः ॥ २० ॥**

**उन्मीलदिति** । उन्मीलन्ती प्रादुर्भवन्ती या लोमलेखा रोमावली सैव मृदुलनवलता मृदुला कोमलस्वभावा नवा अचिरप्ररूढा लता तस्या जलप्रदानावश्यकत्वेन मूले बद्धं रचितमालवालं तथा सिद्धानां देवानां सिद्ध्यनुकूलव्यापारशालिनां च आदिमस्य प्रथमस्य 'मुक्तानामपि सिद्धानां कश्चिद्यतति सिद्धये ।' इति स्मृतेः । मूलपद्मं मूलं सकललोककारणरूपं यत्पद्मं नाभिपद्मं तदेवालयो यस्य । पद्मस्य लोकरूपत्वं श्रीभागवते—'तल्लोकपद्मं स्वत एव विष्णुः प्रावीविशत्सर्वगुणावभासम्' इति । उदरगतसकललोकस्थितिं दृष्ट्वा

बहिस्तादवस्थ्येन जगन्निर्मातुं तदाश्रयस्य धातुः ब्रह्मणः असुनियमनबिलमसुनियमनं प्राणायामः तदर्थं बिलं गुम्फ इति यस्य ख्यातिः विविक्तदेशस्थितस्य प्राणायामश्रवणात्। स चाङ्गं योगसहकृत् तपोज्ञानामुपलक्षणम्। तपःकरणं श्रीभागवते प्रसिद्धम्— 'अतप्यत स्वाखिललोकतापनं तपस्तपीयांस्तपतां समाहितः।' इति। श्रुतौ च— 'ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत।' इति। लयसमये प्रलयकाले स्वकुक्षौ संक्षिप्तानां संहृतानां पिष्टपानां लोकानां तद्वच्चराचरात्मकजीवानामित्यर्थः। प्रवेशद्वारं किलेति प्रसिद्धम्। अत्र नाभेः रोमालिलतालवालत्वेन धातुः प्राणायामबिलत्वेन प्रलये लोकानां भगवत्कुक्षिप्रवेशद्वारत्वेनोत्प्रेक्षा सा च व्यञ्जकाप्रयोगाद्गम्या। भुवनभयभिदः सकलाभयदातुः श्रीनारायणस्य एतादृशीं गभीरनाभिं चेतसः अन्तः चित्तमध्ये चिन्तयेत् ॥ २० ॥

**धत्तां चित्तेऽस्य नाभिह्रदमतिहृदयाह्लादनं यत्र पुण्यैः**
**स्नाता लावण्यतोयैर्भजति मुनिमतिः पूततां यन्निगूढम्।**
**स्रष्टुश्चावेशनं सन्मधुपजनमनोरञ्जनायैव गञ्जां**
**कञ्जं रोमालिमालानुसरति मधुनः सौरभे बद्धबुद्धिः ॥ २१ ॥**

**धत्तामिति।** अस्य श्रीनारायणस्य अतिहृदयाह्लादनमतिशयेन मनोरञ्जनं नाभिरेव ह्रदस्तं 'तत्रागाधजलो ह्रदः' इत्यमरः। चित्ते धत्तां चिन्तयेदित्यर्थः। ह्रदधर्ममाह—यत्र नाभिह्रदे मुनिमतिः पुण्यैः पुण्योत्पादकैः। अत्र नाभिह्रदस्य भगवदीयत्वेन गङ्गावत्पावनत्वात्तीर्थत्वं च। 'सरस्सु देवखातेषु तीर्थेषु च नदीषु च। स्नानेन च क्रिया यस्य स्नात्वा पुण्यफलं मतम्॥' इति शङ्खोक्तेः। लावण्यानि कान्तिविशेषाः तान्येव तोयानि तैः स्नाता सती स्नानार्थं जले प्रवेशवद्ध्यानेन तत्र प्रवेशात्पूततां भजति पवित्रीभवतीत्यर्थः। यन्निगूढं यस्मिन्निगूढं स्रष्टुः ब्रह्मणः आवेशनं सकलभुवनघटनाशिल्पिशालारूपं पुराणे तत्र स्थित्वा धातुस्त्रिभुवनविधानदर्शनात्। तथाच ब्रह्माण्डपुराणे—'तानेव लोकान्गर्भस्थान्वीक्षितुं पद्मसंभवः। श्रीपतेरुदरं भूयः प्रविवेश पितामहः॥' इति। सन्त एव मधुपजनाः सुरापजनाः भ्रमररूपप्राणिनो वा तेषां मनोरञ्जनाय हृदयप्रीणनाय गञ्जां सुरासदनम्। एवकारस्तत्रोत्प्रेक्षावाचकः। यथा मधुपा मधुपानेन माद्यन्ति तथा तन्नाभिकमलध्यानेन सन्तो माद्यन्तीति भावः। ईदृशं कञ्जमर्थाद्भुवनात्मकं सृष्ट्यादौ नाभिजन्यं

तदेवात्र नाभिह्रदे निलीय वर्त्तते । रोमाण्येव अलिमाला । अत्र रोमशब्देन उदरोपरितन-रोमरेखैवोच्यते प्रकरणवशात् । मधुनः सौरभे बद्धबुद्धिः सती तत्सौरभाकृष्टा सतीत्यर्थः । ह्रदान्तर्लीनस्य मुकुलीकृतस्य तस्य सौरभवर्णनमसाधारणत्वात् । अनुसरति कुत्र वर्तत इत्यन्वेष्टुं प्रसरतीत्युत्प्रेक्षा । सा गम्या । अत्र रूपकोत्प्रेक्षयोः संकरः ॥ २१ ॥

**मीनैः स्वान्तर्निलीनैर्मुनिहृदयमयैः श्लाघ्यगम्भीरिमश्री-**
**र्भाव्या कीर्तिप्रसूनैः सुरभिरभिनवैरब्जनाभस्य नाभिः ।**
**रोमालीकालियोऽसौ भजति गतिभिदः सौभरेः शापपाशा-**
**द्दुःसर्पं सर्पहन्त्रा ह्रदमवकलयन्यां कलिन्दात्मजायाः ॥ २२ ॥**

**मीनैरिति** । स्वान्तर्निलीनैः अतिगाम्भीर्यादन्तःस्थितैः पक्षे गाढध्यानवशादतीव मध्यावगाढैः मुनिह्रदयमयैर्मुनिह्रदयस्वरूपैः तदभिन्नस्वरूपैरित्यर्थः । स्वरूपे मयट् । मीनैः श्लाघ्या प्रशस्या गम्भीरिमश्रीः गाम्भीर्यश्रीः तदतिशयो यस्याः सा । मुनि-मनसां बहुत्वादाशुगामित्वाच्च तद्गाम्भीर्यप्राप्त्या प्रशंसा युक्ता । अभिनवैः नित्यनूतनैः कीर्त्तयः शोभातिशयख्यातयः एव प्रसूनानि तैः सुरभिः यद्वा ता एव मेघप्रसूनानि । 'मेघपुष्पं घनरसः' इति जलपर्यायपठितस्य मेघपुष्पशब्दस्य भीमभीमसेनादिवन्नामैक-देशग्रहणमत्र स्थितेर्गतिश्चिन्तनीयेति न्यायात् । नाभौ ह्रदरूपेण 'अगाधजलो ह्रदः' इति तत्तादात्म्यप्रयोजकौचित्यं चिन्त्यम् । अन्यथा मीनसंचरणं कालियभञ्जनं दुर्घटं स्यात् । अत्र सौरभे प्रयोजनाभावश्च । तथापि पद्मनाभस्य नाभिरिति स्वनिष्ठपद्मसौरभेण तच्चारिता-र्थ्यम् । ईदृशी अब्जनाभस्य पद्मनाभस्य श्रीनारायणस्य नाभिः भाव्या भावनाविषयीकर्तव्या । असौ ध्यानसान्निध्यात्पुरस्कृत इत्यर्थः । रोमाल्येव कालियः नैल्याद्दैर्घ्यसाम्यात् । यां नाभिं गतिभिदः तत्रत्यस्वकर्तृकगमनप्रतिबन्धकर्त्तुः सौभरेः तत्र तपस्यतो मुनेः गरुडेन क्षुधितेन मीनपतौ भक्षणार्थं नीते दुःखितान्मीनान्दृष्ट्वा कृपया गरुडं शप्तवतः 'अत्र प्रविश्य गरुडो यदि मत्स्यान्स खादति । सद्यः प्राणैर्वियुज्येत' इति दशमोक्तेः । ईदृशः शाप एव पाशः तस्मात् । यथा पाशवेष्टितेन प्रवेष्टुं न शक्यते एवं शप्तेन तत्र तथात्वात्सर्पहन्त्रा गरुडेन दुःसर्पो दुःखेन सृप्यते यस्तम् । 'ईषद्दुःसुषु' इति खल् । दुष्प्रवेशं कलिन्दात्मजायाः यमुनायाः नैल्यसाधर्म्येण श्रीरूपशोभितायाः नाभेः तन्निष्ठत्वात्तत्संबन्धिनं ह्रदं पुटभेदविशेषं

'चक्राणि पुटभेदाः स्युः' इत्यमरः । अवकलयन् जानन् । अत्र कलिधातुर्ज्ञानार्थः । भजति स्वापराधरुष्टाद्गरुडाद्भीत्या तत्र स्थातुं गच्छतीत्युत्प्रेक्षा । अन्यत्र सर्वत्र रूपकम् । अत्रोत्प्रेक्षा इति संकरः ॥ २२ ॥

त्रिगुणमायाकार्य–संसारनिवर्तिकां रोमावलीं त्रिभिर्वर्णयति—

**संसारक्षारवारांनिधितरणविधौ बद्धरामालिलीला**
**रोमाली ऋष्टियष्टिर्घनवृजिनवनीलावनी भावनीया ।**
**पश्यामः श्यामसूत्रं निहितमिव समं भूमिसीमाविभागं**
**कर्त्तुं भर्त्तुः शरीरे किल कलहजुषा यां कलत्रद्वयेन ॥ २३ ॥**

**संसारेति** । संसार एव क्षारवारांनिधिः लवणसमुद्रः । कटुत्वेन हेयत्वात्संसारस्य क्षारसमुद्ररूपणमन्यथा वारांनिधिरित्येतावता गतार्थः स्यात् । तस्य तरणविधौ लङ्घनकर्मणि बद्धा संबद्धा रामालिलीला रामकृतसेतुलीला यया सा । यथा रामस्य सेतुः सागरोत्तरणे हेतुः एवमियं स्वचिन्तकानां संसारतरणे हेतुरित्यर्थः । तथा घना सान्द्रा अत्यन्ताभ्यासकृता या वृजिनवनी वनीत्वसाम्यं दुश्छेद्यत्वात् । संसारोत्पादकदुरिताटवी तस्याः लावनी लावनकरण-रूपा स्वार्थस्य ण्यन्तस्य लूञ्धातोः 'करणाधिकरणयोश्च' इति ल्युट् । ऋष्टियष्टिः[1] खड्ग-दण्डः एवंविधा रोमाली प्रकरणान्नारायणस्येत्यर्थः । भावनीया चिन्तनीया । कलहजुषा सापत्न्यात्कलहं कुर्वता कलत्रद्वयेन भर्त्तुः शरीरे स्वस्वालिङ्गनाद्युपभोगार्थं समं तुल्यं भूमेः सीमायाः इत आरभ्य एतत्पर्यन्तमित्यवधेः विभागं कर्त्तुं निहितं प्रसारितं श्यामसूत्रमिव मसीरञ्जितगुणमिव यां रोमावलीं पश्यामः उत्प्रेक्षामहे । सा भावनीया इति किलेति प्रसिद्धम् । अत्रापि रूपकोत्प्रेक्षयोः संकरः ॥ २३ ॥

**नाभ्या सारोजनाभ्या विलसदिव बहिर्भूय गर्भाज्जनन्या-**
**बालत्वान्नीलरोमावलिनिभनिभृतं तन्नभोन्तर्निभाल्यम् ।**
**जाने यस्यौचिती सा कविभिरभिमता श्यामता खड्गलेखो-**
**पज्ञं सद्यः प्रसूतार्भकभृशशिशुतोपक्रमं क्षामता च ॥ २४ ॥**

---

१ ऋष्टिः उभयतो धारायुक्तः खड्गविशेषः । 'ऋत्यकः' इति प्रकृतिभावः ।

**नाभ्या इति ।** सारोजनाभ्याः सरोजनाभस्य इयं सारोजनाभी तस्याः नाभ्याः जनन्याः जनयित्र्याः गर्भान्मध्यात्कुक्षेश्च 'नाभ्या आसीदन्तरिक्षम्' इति श्रुतेः । बहिर्भूय निर्गत्य उत्पद्येव विलसत्प्रकाशमानं बालत्वाच्छिशुत्वात्केशत्वाच्च नीलरोमावलिनिभनिभृतं श्यामरोमरेखाच्छद्मच्छन्नं रोमावलीत्युच्यते वस्तुतो न ईदृशम् । तन्नभः अन्तः हृदयान्तः निभाल्यं चिन्तनीयम् । यस्य नभसः खड्गलेखा उपज्ञा यस्य 'उपज्ञा ज्ञानमाद्यं स्यात्' इत्यमरः । कविभिः अभिमता संमता सा श्यामता नीलत्वं तथा सद्यःप्रसूतस्यार्भकस्य भृशं शिशुतयोपक्रान्ता शिशुतोपक्रमं तथा प्रथमक्रीडा क्षामता औचिती स्वार्थेण् । उचितेति जाने तर्कयामि 'उपज्ञोपक्रमं तदाद्याचिरव्यासायाम्' इत्यव्ययीभावः । यत्सद्यो जायते तत्क्षामं भवति श्यामत्वं साहजिकमेवेति भावः । अत्र यदि आकाशस्य नित्यत्वेनाजन्यत्वं विभुत्वमिति नैयायिकोद्घोषः । स वृथैव श्रुत्यसंमतत्वात् । यथा 'तस्माद्वा एतस्मादाकाशः संभूतः' 'नाभ्या आसीदन्तरिक्षम्' इति श्रुत्यभ्यासबलात् । 'यावद्विकारं विभागो लोकबलात्' इति ब्रह्मसूत्रे आकाशोत्पत्तिसिद्धान्ताच्च । तज्जन्यत्वेन परिच्छिन्नत्वादिकमुचितमिति । अत्र व्याजापह्नुत्युत्थापितोत्प्रेक्षा ॥ २४ ॥

**नाभीकूपे दिदृक्षाकुतुकनिपतिते श्रीदृशावुज्जिहीर्षोः**
**[1]सज्ज्वां रज्जुं स्मरस्य भ्रमरमयगुणं भ्रूधनुर्योगयोग्यम् ।**
**भ्रष्टां कण्ठोपकण्ठात्कमलजनिहितां नीलनालीकमालां**
**काञ्चीशक्राश्मरश्मिं स्मरतु मधुजितो राजितां रोमराजिम् ॥ २५ ॥**

**नाभीकूपेति ।** नाभ्येव कूपस्तस्मिन्दिदृक्षाकुतुकेन अयं नाभीकूपः कियद्गभीर इति दर्शने निपतिते स्खलिते च तत्स्वभावदर्शनलग्ने श्रीदृशौ लक्ष्मीनेत्रे उज्जिहीर्षोः उद्धर्तुमिच्छोः स्मरस्य प्रद्युम्नरूपेण स्वपुत्रस्य भ्रूधनुर्योगयोग्यं श्रीनारायणभ्रूचापसंयोगार्हं भ्रमरमयगुणं कामचापस्य भ्रमरगुणत्वप्रसिद्धेः । तदभिन्नां ज्यां [1]सज्ज्वामुद्धरणाय प्रसारितां रज्जुमिव स्थितां रज्जुनैल्यार्थं भ्रमरगुणाभिन्नत्वं नाभिकूपे पतितस्वमातृलक्ष्मीनयनोद्धरणसंभ्रान्तस्य स्वपुत्रस्य कामस्य स्वधनूरूपनारायणभ्रूयुगावरूपितप्रसारितभ्रमरमयगुणाभिन्नत्वरज्जुत्वेनात्र रोमावलि[2]-

१ तज्ज्यामिति पाठो भवेत् । २ रोमावलेरिति पाठो भवेत् ।

रुत्प्रेक्षा । एवमुत्तरत्र सर्वत्र । कण्ठोपकण्ठाद्भ्रष्टां कमलजेन नाभिपद्मजन्मना पुत्रेण ब्रह्मणा जगन्निर्माणादौ पूजायां निहितां नीलनालीकमालां नीलोत्पलमालामिव स्थितां काञ्चीशक्राश्मरश्मि काञ्चीस्थितमहेन्द्रनीलोत्पलकिरणधारामिव स्थितामेवं राजितां शोभमानां मधुजितः श्रीनारायणस्य मधुजित इत्यत्र मुरजित इत्युक्तिः साधीयसी । रोमराजिं स्मरतु ॥ २५ ॥

अथ चतुर्वर्गद्रविणागारकवाटं वक्षस्तटं चतुर्भिर्वर्णयति—

**वक्षो धीक्षोभदक्षं नगरिपुनगरीनागरीणां गरीयः**
**सौन्दर्योद्गारहृद्यं स्वहृदि भगवतो भावयेद्भक्तियुक्तः ।**
**विद्युल्लोलापि यस्मिन्सलिलघनघनश्यामले प्रेमवश्या**
**पश्यासस्थेमसीमा कषदृषदि लसद्धेमलेखेव लक्ष्मीः ॥ २६ ॥**

**वक्ष इति** । नगरिपोरिन्द्रस्य नगर्याममरावत्यां या नागर्यः वराप्सरसः तासां धीक्षोभे बुद्धिचापल्ये दक्षं वीक्षणमात्रेण सुराङ्गनानङ्गरसतरङ्गवर्द्धनं यतः गरीयः सौन्दर्योद्गारेण विसृत्वरलोकोत्तरलावण्यातिशयेन हृद्यं हृदयङ्गमं भगवतः षडैश्वर्यादिपूर्णस्य ‘ ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ’ इति स्मरणात् । श्रीनारायणस्य वक्षः भक्तियुक्तः भक्तः जनः स्वहृदि भावयेत् । सलिलघनः सान्द्रतया जलपूर्णः घन इव श्यामले यस्मिन्वक्षसि विद्युदिव लोला चञ्चलापि लक्ष्मीः प्रेम्णा वश्या सती कषदृषदि निकषोपले लसन्ती कषणेन प्रकाशमाना हेमलेखेव आप्ता प्राप्ता स्थेमसीमा स्थैर्यावधिः यया सा नित्यं तत्र स्थितेत्यर्थः । आस्ते इति शेषः । पश्य लक्ष्म्याः स्थिरताप्त्या आसनक्रियाया दृशि-क्रियाकर्मत्वम् । तेनैकवाक्यत्वं न तु आस्ते तां पश्य इति वाक्यद्वयम् । ‘ पश्य मृगो धावति ’ इतिवत् । परमचञ्चलाया लक्ष्मीदेव्या निरवधिस्थिरतासंपादकस्य श्रीभगवद्वक्षसः सुराङ्गनाक्षोभकत्वं किं वक्तव्यमिति कैमुतिकालंकारो व्यज्यते । अत्रोपमालङ्कारश्च ॥ २६ ॥

**श्रीवत्साङ्कस्य वत्सं स्मरतु चिरतरं भ्रातरावब्धिपुत्रौ**
**बिभ्रद्यत्नेन रत्ने वरमणिरमणीवर्गयुग्मप्रधाने ।**

**लक्ष्मीसंभोगलक्ष्म स्तनयुगललसत्कुङ्कुमं कौस्तुभोस्या-**
**लज्जालोपाय यस्मिंस्तिरयति तरुणार्कांशुसंकाशभासा ॥ २७ ॥**

**श्रीवत्साङ्कस्येति** । अब्धिपुत्रौ अत एव भ्रातरौ । भगिनी च भ्राता च भ्रातरौ[1] । तौ कथम्भूतौ ? वरमणीनां श्रेष्ठरत्नानां रमणीनां स्त्रीणां वर्गयोः युग्मे प्रधाने त्रिलोकस्थितैतद्-द्वयस्य स्वद्वयातिरिक्तप्राधान्याभावाद्रत्ने श्रेष्ठवस्तुनी यत्नेन बिभ्रद्रत्नानां यत्नेन धारणावश्यंभावात् । श्रीवत्साङ्कस्य नारायणस्य वत्सं वक्षः 'उरो वत्सं च वक्षश्च' इत्यमरः । चिरतरमतिदीर्घकालं सर्वदेति यावत् । स्मरतु । यस्मिन्वत्से कौस्तुभः मणिः लक्ष्मीसंभोगस्य लक्ष्म स्तनयुगले लसत् स्वस्मिन्संक्रान्तं कुङ्कुमं काश्मीरमस्याः लक्ष्म्याः लज्जालोपाय त्रपानाशाय तरुणार्को नवोदितादित्यः तत्संकाशया तत्सदृशया भासा कान्त्या कौस्तुभस्य पद्मरागभूषणत्वादरुण-कान्त्या तिरयति आच्छादयति । भगवद्वक्षःसंक्रान्तं लक्ष्मीस्तनकुङ्कुमं कुङ्कुमसदृशेन स्वरोचिषा छादयन्कौस्तुभः स्वभगिन्या लक्ष्म्या उपकारं करोतीति संभोगतः चिह्नलोप-हेतुत्वेन लक्ष्मीकौस्तुभधारणौचित्यमिति वस्तुव्यञ्जनं तच्चानुप्रासरूपकसंकीर्णम् ॥ २७ ॥

**धौतं लावण्यनीरैः शिशिरमपि रमाश्वाससंज्ञैः समीरैः**
**सान्द्रीभूतेन्द्रनीलैः सपटिमघटितं कुट्टिमं स्निग्धमुग्धम् ।**
**ध्यातव्यं माधवोरः सुरतरुसुमनः स्रक्स्फुरत्पुष्पतल्पे**
**यस्मिन्नानन्दनिद्रां भजति मुनिमनो विस्मृताशेषतापम् ॥ २८ ॥**

**धौतमिति** । लावण्यनीरैः धौतं क्षालितं रमायाः लक्ष्म्याः श्वाससंज्ञैः श्वासनामभिः समीरैः पवनैः शिशिरं शीतलं चार्थे अपिशब्दः । सान्द्रीभूतेन्द्रनीलैः घनीभूतनीलमणिभिः सपटिमघटितं पटिम्ना शिल्पनैपुण्येन सह घटितं निर्मितं स्निग्धं मुग्धं च तत् । विशेषणसमासः । ईदृशं माधवोरः माधवस्य लक्ष्मीपतेः श्रीनारायणस्य वक्षः कुट्टिमं मणिबद्धभूरियमिति यावत् । ध्यातव्यम् । उरसः शयनयोग्यकुट्टिमसादृश्यात्सुरतरुसुमनसां कल्पद्रुमकुसुमानां स्रगेव स्फुरत्पुष्पमयं तल्पं शय्या यस्मिन्नीदृशे यस्मिन्नुरसि मुनिमनः विस्मृतः अशेषः सर्वः आध्यात्मिकादिः तापो यस्मिन्निति क्रियाविशेषणम् । आनन्दनिद्रा-

---

१ लक्ष्मी-कौस्तुभौ ।

मानन्दः स्मरणजन्यः स एव निद्रा तां निद्राविषयमपस्मारकमित्यर्थः। तद्ध्यानस्य तथात्वात्। भजति । रूपकालङ्कारः ॥ २८ ॥

**दुर्द्धर्षं वैरिवर्गैर्विततमतिदृढं पुण्डरीकाक्षवक्षो-**
**वीक्षेत ध्यानदृष्ट्यामरनगरमहाद्वाररक्षाकवाटम् ।**
**चित्रं तत्पार्श्वयोस्ता घनमपि घटिता अर्गला दोर्गणाख्या-**
**गर्वेणानर्गलानां समिति दितिभुवां स्वर्गमार्गं दिशन्ति ॥ २९ ॥**

**दुर्द्धर्षमिति** । वैरिवर्गैः दैत्याभिन्नैः रिपुसमूहैः दुर्द्धर्षं धर्षितुमशक्यं तत्र हेतवः— विततं विस्तीर्णमतिदृढमतिशयेन दृढं स्थूलं बलवद्वा । 'दृढः स्थूलबलयोः' इति निपातनात् । एवं कवाटधर्मत्वात् । अमरनगरस्य अमरावत्या यन्महद्द्वारं तस्य रक्षार्थं कवाटमिव स्थितम्। दैत्यनिग्रहेण भगवत आदित्यपरिपालनात् । ईदृशं पुण्डरीकाक्षवक्षः ध्यानदृष्ट्या वीक्षेत ध्यायेदित्यर्थः । तत्पार्श्वयोः उरःकवाटपार्श्वयोः घनं सांयुगीनधर्मवत्त्वेन निबिडं यथा तथा घटिताः स्वतःसिद्धतया निर्मिताः 'सर्वे नित्याः शाश्वताश्च' इति भगवद्विग्रहस्य नित्यत्वस्मरणात् । अर्गलस्य पक्षे पिहितकवाटदार्ढ्यार्थं पश्चान्निबिडतया संहिता अपि प्रसिद्धाः दोर्गणाख्याः बाहुचतुष्टयनाम्न्यः अर्गलाः कवाटविष्कम्भकदारूणि समिति युद्धे गर्वेण वीराहंकारेण अनर्गलानामप्रतिबन्धवीरपराक्रमाणां दितिभुवां दैत्यानां हिरण्यकशिपुप्रभृतीनां स्वर्गमार्गं स्वर्गवर्त्म मोक्षमार्गं 'यत्र दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं तत्सुखं स्वर्गपदास्पदम् ॥' इति स्वर्गसुखस्मरणात्। सुखस्य च मुक्त्यपरपर्यायत्वात्। 'तदरयोऽपि ययुः स्मरणात्' 'स्निग्धाः स्वरूपं ययुः' इति श्रीभागवतोक्तेः । 'ये मे हताश्चक्रधरेण दैत्यास्ते ते गता वै निलयं तदीयम्' इति स्मृतेश्च । दिशन्ति प्रयच्छन्ति । विवटनेन मार्गपिधायकं वक्षःकवाटमन्तरेण भुजार्गलाः मार्गं दिशन्तीति चित्रम्। अत्र रूपकानुप्रासयोः संकरः ॥ २९ ॥

अथ 'तान्त्रिकाः परिचर्यायां केवलस्य श्रियः पतेः। अङ्गोपाङ्गायुधाकल्पं कल्पयन्ति यथैव यैः ॥' इति श्रीभागवते द्वादशस्कन्धोक्तेः कौस्तुभस्याकल्पत्वेन श्रीभगवदङ्गत्वात्त्रिभिः श्लोकैस्त्रिलोकदुर्लभशोभं कौस्तुभं वर्णयति—

**उद्यत्प्रद्योतनाभो मणिसरसि लसन्पद्मनाभस्य भाव्यो-**
**यद्दीप्तिव्याप्तिलुप्ता द्युतिरमरशिरो रत्नखद्योतराशेः ।**
**किंवान्यद्दैन्यमागादहह महदहर्दीपवद्यत्समीपे**
**जैत्रं नेत्रं स्फुटं धूर्जटिनिटिलतटे शोचनीयस्वशोचिः ॥ ३० ॥**

**उद्यत्प्रद्योतनेति** । उद्यन् यः प्रद्योतयतीति प्रद्योतनः सूर्यः । 'उद्यत्प्रद्योतनशतनिभम्' इति नारायणस्य ध्यानलिङ्गात् । तस्येव आभा यस्य सः । पद्मनाभस्य नारायणस्य उरसि वक्षसि लसन् शोभमानः एतेन उरस आकाशत्वं ध्वनितम् । मणिः कौस्तुभः । वक्षसि मणिसत्त्वेपि[1] तदतिरिक्तवर्ण्यमानगुणविशिष्टमणेरभावात् । भाव्यो ध्येयः । तस्य सूर्यसाधर्म्यं प्रस्तौति—कीदृशः ? अमरशिरोरत्नखद्योतराशेः देवनिकरशिरःस्थमुकुटघटितमणिश्रेणिज्योतिरिङ्गणगणस्य द्युतिः शोभा यस्य दीप्तिव्याप्त्या तेजःप्रसरणेन लुप्ता अस्तंगता भवतीति शेषः । अन्यत्किंवा इतरेषां तेजसां वैरूप्यं किं वक्तव्यम् । यस्य मणेः समीपे धूर्जटेः शिवस्य निटिलतटे ललाटपट्टे स्फुटं प्रकाशमानं जैत्रं प्रलयसमये त्रिभुवनदहनक्षमं नेत्रं दहनात्मकं तृतीयं चक्षुः अहर्दीपवच्छोचनीयं जगद्दाहकस्य ईदृशी दशा जातेति शोचनीयं शोच्यं स्वशोचिः स्वप्रकाशो यस्य तत् । यद्वा सुष्टु अशोचिः शोचिरभावो यस्येति एवं सन्महद्दैन्यमागात्प्रापत् । अहह खेदे । 'कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः ।' इति श्रीभागवतोक्तेः । स्वात्मज्योतिः शुद्धचैतन्यमिति ख्यातं 'यस्य भासा सर्वमिदं विभाति' इति श्रुतेश्च । तस्मात्कौस्तुभस्य श्रीभगवत्तेजस्त्वेन सर्वतेजोभिभावकत्वं युक्तमिति भावः ॥ ३० ॥

**उद्यन्तं भानुमन्तं जननयनमुदे कौस्तुभाह्वां वहन्तं**
**तद्वक्षोव्योमभाजं भजतु निजहृदा पद्मरागाधिराजम् ।**
**तेजोजालानि बालातपपटलयता दिङ्मुखालोकहेतो-**
**र्येन क्षीरोदशायी हरिरधिशयितो बोध्यसूक्तिसन्धुमध्यम् ॥ ३१ ॥**

**उद्यन्तमिति** । जननयनानां मुदे प्रीत्यै आह्लादनायेत्यर्थः । कौस्तुभ इति आह्वां नाम वहन्तं कौस्तुभस्य भगवत्तेजस्त्वेनाह्लादकत्वात्परमार्थतः सूर्यमित्यर्थः । अत एव

---

१ बहुत्वेपि इति भवेत् ।

तद्वक्षः नारायणवक्ष एव व्योमाकाशं तद्व्रजतीति तं पद्मरागाधिराजं पद्मरागाणां मणिविशेषाणां मध्ये अधिराजं परमश्रेष्ठकौस्तुभस्य पद्मरागत्वं श्रीभागवते कथितम्— 'कौस्तुभाख्यमभूद्रत्नं पद्मरागं महोदधेः ।' इति । सूर्यपक्षे पद्मानां रागस्य विकसनेन अरुणिम्नः अधिकं राजः प्रकाशो यस्मात्तम् । राजधातोर्घञर्थे कप्रत्ययः । उद्यन्तं प्रकाशमानमुदितं च भानुमन्तं प्रसरत्किरणं च सूर्यं निजहृदा भजतु । भक्त इति शेषः । दिङ्मुखानामालोकहेतोः । प्रकाशनार्थं सूर्यधर्मत्वात् । तेजोजालानि किरणगणान्बालातप-पटलयता बालातपसमूहं कुर्वता । 'तत्करोति तदाचष्टे' इति णिच् । येन कौस्तुभेन क्षीरोदशायी हरिः नारायणः असृक्सिन्धुमध्यमधिशयितः इति स्वमिति शेषः । अबोधि[1] ज्ञातवान् । 'दीपजन' इति बुधधातोर्लुङि चण् । 'अधिशीङ्स्थासाम्' इति मध्यस्याधारस्य कर्मत्वम् । क्षीरसिन्धोः स्वगुणत्यागेन परगुणग्रहणात्तद्गुणालङ्कारः । स चानुप्रासंसंकीर्णः ॥ ३१ ॥

**श्रीविष्णोः कृष्णकान्त्या मरकतहरिणीं स्वर्णवर्णां स्वमूर्तिं**
**भर्त्तुर्वक्षःस्थलस्था क्षितिरिति विदती श्रीर्यदन्तः स्फुरन्तीम् ।**
**रुष्टा तुष्टा च तस्यामरुणरुचिरुषा वर्णसाम्याद्वृतायां**
**छव्या नव्यार्कमित्रं मणिरियममला ध्यायतामायतास्थैः ॥ ३२ ॥**

**श्रीविष्णोरिति** । श्रीः लक्ष्मीः श्रीविष्णोर्नारायणस्य कृष्णया श्यामया कान्त्या मरकतमिव हरिणीं हरिद्वर्णां[2] 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीष् तकारस्य नकारश्च । 'रषाभ्यां नो णः' इति णत्वम् । यदन्तः यस्य नारायणस्य अन्तः वक्षोमध्ये स्फुरन्तीं प्रतिबिम्बितां वक्षसः स्वच्छत्वात्प्रतिबिम्बः । स्वर्णवर्णामपि स्वमूर्तिं भर्त्तुः पत्युः वक्षःस्थलस्था क्षितिरिति विदती जानती रुष्टा तस्यां स्वप्रतिबिम्बमूर्त्तौ स्वोत्पन्नक्रोधेन अरुणरुचि सत्यां मणेः कौस्तुभस्य वर्णसाम्येन शोणरुचिसादृश्येन आवृतायामाच्छादितायां सत्यां तुष्टा च मम क्रोधं ज्ञात्वा क्षितिः भर्तृहृदयात्पलायिता इति मत्वेति भावः । छव्या कान्त्या

१ कौस्तुभमणे रक्तप्रभया लिप्ते क्षीरोदधौ सुप्तो हरिरात्मानं रक्ताम्बुधौ सुप्तं ज्ञातवान् ।

२ पीतवर्णः श्यामवर्णेन मिश्रो हरिद्वर्णो भवतीति प्रसिद्धिः ।

नव्यार्कमित्रं नवोदितसूर्यसदृशी अमला निर्मला इयं मणिः कौस्तुभाख्या आयतास्थैः परमादरयुक्तैः ध्यायतां चिन्त्यताम् । ध्यै धातोः कर्मणि लोट् । अत्र मणेः स्त्रीत्वेन यथा लोके काचित्सखी स्वसख्याः मानेर्ष्याद्युत्पत्तिं येन केनचिदुपायेन निवर्त्तयति तद्वदिति वस्तु व्यज्यते । पूर्ववत्तद्गुणालङ्कारः ॥ ३२ ॥

अत्र त्रिभिः श्लोकैः त्रिगुणोत्तमसत्त्वगुणात्मकं श्रीवत्सं वर्णयति—

**अर्केन्द्वक्षस्य वक्षस्यधिगतसुषमं श्यामरोमालिमौलौ**
**श्रीवत्सं वत्सलात्मा स्मरतु धवलिमस्मेररोमाङ्कुराङ्कम् ।**
**यं केलीबालवीरुच्छिरसि विकसितं दोहदस्य प्रदाना-**
**द्दर्शं दर्शं प्रसूनस्तबकमिव नवं मोदते पद्मसद्मा ॥ ३३ ॥**

**अर्केन्द्वक्षस्येति** । अर्केन्दू अक्षिणी यस्य तस्य श्रीनारायणस्य । इन्दुशब्दस्य घित्वेन पूर्वनिपाते प्राप्ते अर्कस्याभ्यर्हितत्वात्पूर्वनिपातः । श्यामरोमालिमौलौ तदग्रदेशे वक्षसि अधिगतसुषमं प्राप्तशोभोत्कर्षं धवलिमस्मेररोमाङ्कुराङ्कं धवलिम्ना स्मेरा इव ये रोमाङ्कुरा-स्तदभिन्नाङ्करूपं श्रीवत्सं श्रीभगवदसाधारणलक्षणं वत्सलात्मा वत्सले भक्तवत्सले भगवति आत्मा मनो यस्य स भक्तः यद्वा वत्सं वक्षः स्मरणीयत्वेन लाति आदत्ते स्मरतीति यावत् । वक्षःस्मरणेन श्रीवत्सस्मरणस्यावश्यकत्वात् । ईदृशं भक्तः स्मरतु । पद्मसद्मा लक्ष्मीः 'डाबुभाभ्यामन्यतरस्याम्' इति विकल्पेन ङीप् । यं श्रीवत्सं दोहदस्य प्रदानात्तत्प्रयोगेण दोहददानेनाकाले तरुवीरुदादयो नवफलपुष्पादिकं धारयन्तीति प्रसिद्धिः । केलीबालवीरुच्छिरसि क्रीडालताग्रे बालत्वं चानुत्पन्नपुष्पफलत्वं विकसितं नवं प्रसूनस्तबकमिव दर्शं दर्शं कौतुकेन पुनः पुनर्दृष्ट्वा मोदते । इयं रोमालिबाललता मद्दोहददानेन श्रीवत्सपुष्पगुच्छं धारयति किमिति लक्ष्मीः पुनः पुनः दृष्ट्वा नन्दति इत्यर्थः । अत्र रूपकोत्थापितोत्प्रेक्षा ॥ ३३ ॥

**कुर्वत्पाथोधिमाथोद्यमसमयपयःफेनसंपर्कतर्कं**
**तादृक्पीताम्बरोरोम्बरचरशरदच्छोदभृच्छेदलक्ष्यम् ।**
**चिन्त्यं श्रीवत्सचिह्नं चिरमुरसि कृतं रक्षणाय प्रजानां**
**जाने श्रीजानिना यद्गुणमतिगुणितं सात्वतैः सत्त्वसंज्ञम् ॥ ३४ ॥**

**कुर्वदिति।** पाथोधेः क्षीरसमुद्रस्य माथोद्यमसमये मथनारम्भकाले यः पयःफेनस्य क्षीरफेनस्य संपर्कः लगनं तस्य तर्कं कुर्वत् तादृक्स्वसदृशं यत्पीताम्बरस्य श्रीनारायणस्य उरः वक्षः तदेवाम्बरमाकाशं तत्र चरतीति चरः तद्गतः शरदो हेतुभूताया अच्छः निर्जलत्वात्। यः उदभृच्छेदः मेघखण्डः तद्वल्लक्ष्यं लक्षणीयं तर्क्यमित्यर्थः। ईदृशं श्रीवत्सचिह्नं चिन्त्यम्। श्रीजानिना लक्ष्मीकान्तेन प्रजानां रक्षणाय चिरमुरसि कृतं सात्वतैः वैष्णवैः अतिगुणितं बहुगुणितं सत्त्वसंज्ञं सत्त्वाख्यं यद्गुणं यच्चिह्नं जाने तर्कयामि। नेदं श्रीवत्सचिह्नं प्रजापालनाय भगवता हृदये धृतं सत्त्वगुणं जाने इति भावः। सत्त्वगुणस्य शुक्लत्वात्पालनहेतुत्वाच्च। अत्र 'अजामेकां लोहितशुक्लकृष्णाम्।' इति श्रुतेः। 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते। स्थित्यादयो हरिविरञ्चिहरेति संज्ञाः' इति श्रीभागवते च। अत्र वस्तूत्प्रेक्षाफलोत्प्रेक्षयोः संकरः॥ ३४॥

**भावं भावं स्वचेतःकुमुदमुदुदयोदीतसोमावदातो-**
**रोमावर्त्तोऽसुरारेरुरसिचररमाहासहृद्योनुमोद्यः।**
**लावण्याम्भोनिधौ तद्वपुषि विपुषितोत्फेनिलावर्त्तमूर्त्तौ**
**न प्रत्यावर्त्तनाय प्रभवति पतितं यत्र नेत्रं मुनीनाम्॥ ३५॥**

**भावं भावमिति।** उरसिचररमाहासहृद्यः वक्षस्थललावण्यलक्ष्मीहाससदृशातमहृदयङ्गमः स्वेषां भक्तानां चेत एव कुमुदं तस्य मुदुदयाय आनन्दोदयाय आनन्दोत्पादनाय उदीतो यः सोमः तद्वदवदातः शुभ्रः सोमस्य कुमुदानन्दोत्पादनवच्छ्रीवत्सस्य भक्तहृदयाह्लादकत्वम्। असुरारेः श्रीनारायणस्य रोमावर्त्तः आवर्त्तरूपरोमसमूहः भावं भावं पुनः पुनः भावयित्वा अनुमोद्यः। अहो मम भाग्यं मदीयमनः कैरवप्रमोदकृते उदितोयं चन्द्र इति श्लाघयेत्। लावण्याम्भोनिधौ तद्वपुषि भगवद्गात्रे विपुषितः पृथुलः उत्फेनिलः फेनयुक्तः यः आवर्त्तः जलभ्रमः तद्वन्मूर्तिः स्वरूपं यस्य तस्मिन्। यत्र श्रीवत्से पतितं मुनीनां मननशीलानां नेत्रं प्रत्यावर्त्तनाय तस्मान्निवर्त्तनाय न प्रभवति न शक्नोति। यथा पतितं वस्तु भ्रमति जले ततो न निष्क्रामति तद्वदिति भावः। रूपकालङ्कारः॥ ३५॥

अथ षड्भिः श्लोकैः भावुकशाट्कौषिकशरीरभारसंपादकान्बाहून्वर्णयति—

**आजानाजानुलम्बाञ्छ्रुतिपथपथिकज्ञानवृद्धावलम्बा-**
**न्राहुद्विड्बाहुदण्डान्कलयतु चतुरः कृत्तपाषण्डदण्डान् ।**
**यानुज्झित्वा विवादं विषयविषरसोदन्यया धावितानां**
**संरोधार्थं गवां संश्रयति यतिजनः सत्रिदण्डैकदण्डः ॥ ३६ ॥**

**आजानेति** । आजानेन स्वभावेन जानुनी अभिव्याप्य इति आजानु लम्बाः तान् । श्रुतिपथो वेदमार्गः तस्मिन्पथिकानां वेदतत्त्वविदामित्यर्थः । ज्ञानवृद्धानामवलम्बा-नालम्बनान् । वृद्धा दण्डमालम्ब्य मार्गे प्रयान्तीति प्रसिद्धिः । कृत्तपाषण्डदण्डान् । पाषण्डाः पापषण्डस्वरूपाः राक्षसाः ‘तानि पापस्य षण्डानि षण्डं लिङ्गमिहोच्यते ।’ इति श्रीभागवतोक्तेः । तेषां दण्डदायकान् । चतुरः राहुद्विषः तच्छिरश्छेदकस्य श्रीनारायणस्य बाहवः एव दण्डास्तान्कलयतु भजतु । कलिधातोरनेकार्थत्वात् । सत्रिदण्डैकदण्डः त्रिविधा दण्डास्त्रिदण्डा एको दण्डश्च तैः सह वर्त्तमानः । त्रिदण्डा इति मध्यपदलोपी समासः अन्यथा समाहारे ङीप्प्राप्त्या त्रिदण्डीति स्यात् । एवंभूतो यतिजनः । जातावेकवचनम् । सत्रिदण्डः सैकदण्ड इत्यर्थः । विवादं बहुप्राप्त्यल्पप्राप्तिरूपं त्रिदण्डिनो बाहुदण्डत्रयग्रहणा-देकदण्डस्य एकबाहुदण्डग्रहणात्स्वस्य दण्डानुरूपेण बाहुदण्डग्रहणस्यौचित्यात् । यद्वा त्रिदण्डिनो रामानुजानुयायिनः चिदचिद्विशिष्टश्रीनारायणस्याद्वैतं मन्यन्ते वस्तुतस्तु द्वैतमेव । एकदण्डिनः शङ्करानुयायिनः निर्धर्मकस्य ब्रह्मणः अद्वैतं मन्यन्ते । तेषां साकारनिराकारत्व-रूपाद्वैतत्वे कलहम् । ग्रन्थविस्तारभयादेतत्प्रपञ्चो नो लिखितः । विवादमुज्झित्वा त्यक्त्वा विषया एव विषरसाः परिपाके दुःखदातृत्वात् । ‘परिपाके विषमिव’ इति गीतोक्तेः । तेषु उदन्या तृष्णा तया हेतुभूतया धावितानां शीघ्रं गच्छन्तीनाम् । धाविः शीघ्रगत्यर्थः । गवामिन्द्रियाणां धेनूनां च संरोधार्थं गाः विषयविषरसेभ्यः संरोद्धुं निवर्त्तयितुं यानाश्रयति भजते । ‘मौनानी-हानिलायामा वाग्देहमनसामिमे । त्रयो दण्डाः सदा धार्या वेणुभिर्न भवेद्यतिः ॥’ इति स्मृतिः । दण्डिनो दण्डस्य गवादिनिवारणार्थत्वात् । एतेन यतिजनस्य पाशुपाल्योत्प्रेक्षा-ध्वनिः सा च रूपकोत्थापिता ॥ ३६ ॥

**कस्तूरीकर्दमं श्रीकुचकलशपरीरम्भसंरम्भलग्नं**
**मग्नं सान्द्रेन्द्रनीलद्युतिजयिनिजरुङ्निर्झरे निह्नुवानान्।**
**ध्यायेद्दोष्णोथ विष्णोर्मधुकरनिकरैर्वर्णगन्धेन दूरा-**
**दाकृष्टैः संनिकृष्टैः पुनरनधिगतो हन्त यद्वर्णगन्धः ॥ ३७ ॥**

**कस्तूरीति**। अथ श्रीवत्सध्यानानन्तरं मङ्गलं वा। अथशब्दस्य माङ्गलिकत्वात्। विष्णोः श्रीनारायणस्य श्रियः लक्ष्म्याः कुचकलशपरीरम्भे स्तनकुम्भालिङ्गने। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः। संरम्भेण त्वरया लग्नम्। त्वरितस्य पङ्कादिसंसर्गाद्य-विचारत्वात्। सान्द्रेन्द्रनीलद्युतिजयिनीनां निजरुचां निर्झरे प्रवाहे मग्नं कस्तूरीकर्दमं लक्ष्मीस्तनाङ्गरागरूपं निह्नुवानान् आच्छादयतः दोष्णः बाहून्ध्यायेत्। वर्णगन्धेन वर्णानुरूपेण गन्धेन सौरभेण वर्णलेशेन वा नीलोत्पलबुद्ध्या दूरादाकृष्टैः अत एव संनिकृष्टैः मधुकरनिकरैः यद्वर्णगन्धः येषां वर्णानुरूपो गन्धः सौरभ्यं यत्कान्तिलेशश्च पुनरनधिगतः अप्राप्तः हन्त खेदे। वर्णगन्धाकृष्टानां भ्रमराणां संनिकर्षेपि वर्णगन्धाप्राप्त्या विरोधालङ्कारः। वस्तुतस्तु भगवद्बाहुवर्णनस्य स्निग्धसौकुमार्ये अतिशयेन रूक्षाणां भ्रमराणां तदलाभ इति भावः ॥ ३७ ॥

**सानन्दं मन्दराद्रेः क्षितियुवतिकुचोत्तुङ्गमालिङ्ग्य शृङ्गं**
**नानाधात्वङ्गरागच्छुरणशबलिताः शूरशृङ्गारिवेशम्।**
**रोमाञ्चैर्निर्विशेषं न्यदधुरुदधिजोद्वाहकाले पुरा ये**
**तान्भूषाभोगभाजो भुजगशयभुजान्भावनाभिर्भजेत ॥ ३८ ॥**

**सानन्दमिति**। ये भुजाः पुरा समुद्रमथनसमये क्षितियुवतिकुचोत्तुङ्गं मही-महिलास्तनोन्नतं मन्दराद्रेः शृङ्गं शिखरं सानन्दमालिङ्ग्य नानाधातवः गैरिकादयः एवाङ्गरागाः चन्दनाद्यनुलेपद्रव्यविशेषाः तेषां छुरणेन संसर्गेण शबलिताः चित्रिताः उदधिजायाः लक्ष्म्याः उद्वाहकाले विवाहसमये शूरशृङ्गारिवेशं समुद्रमथनौपयिकं शृङ्गारिणः कामुकस्य वेशं लक्ष्मीसंभोगौपयिकं रोमाञ्चैः जलधिमथनोत्साहजनितैः निर्विशेषं शूरशृङ्गारिसाधारणं रोमाञ्चस्य वीरशृङ्गारोभयरससाधारणत्वान्न्यदधुः। भूषाणामाभोगमतिशयनं भजतः तान्भुजग-

शयभुजाञ्शेषशायिनः श्रीनारायणस्य बाहून्भावनाभिः ध्यानपौनःपुन्येन भजेत । अत्र रूपकोत्थापितरसवदलंकारः ॥ ३८ ॥

**निष्कम्पं कैटभस्याप्यतिविकटभुजावज्रगाढप्रहारा-**
**न्सोढारो भूयसोब्दांस्त्रिभुवनभवनस्तम्भसंभावनार्हाः ।**
**पर्याप्तं पारिहार्याङ्गदमयवलयै रत्नकीलानुविद्धै-**
**र्दार्ढ्याढ्यं भावुकास्ते दनुजमदभिदो बाहवो भावनीयाः ॥ ३९ ॥**

**निष्कम्पमिति ।** कैटभस्य तन्नाम्नोसुरस्य अपि अतिविकटाः भयङ्कराः ये भुजाः वज्रगाढप्रहाराः दोस्तम्भदम्भोलिनिर्भराघाताः तान्निष्कम्पं चलनशून्यं यथा तथा भूयसोब्दान्बहुसंवत्सरान् । अत्यन्तसंयोगे द्वितीया । 'युयुधे भगवान् हरिः । पञ्चवर्षसहस्राणि बाहुप्रहरणो विभुः ॥' इति मार्कण्डेयपुराणात् । सोढारः सहमानान् । त्रिभुवनमेव भवनं तदवष्टम्भस्तम्भा इति या संभावना उत्प्रेक्षा तामर्हन्तीति तद्योग्याः त्रिभुवनरक्षकत्वात् । रत्नानां कीला ज्वालाः त एव कीलाः शङ्कवः तैः अनुविद्धैः दार्ढ्यार्थं विन्यस्तैः पारिहार्याः करभूषणानि अङ्गदानि बाहुभूषणानि तन्मयानि तद्रूपाणि वलयानि तैः । स्तम्भानामतिदृढत्वार्थं निर्मितैः लोहपट्टैः पर्याप्तं यथेष्टं दार्ढ्येनाढ्यंभावुकाः दार्ढ्यसंपन्नाः दनुजमदभिदः दैत्यारेः नारायणस्य बाहवः भावनीयाः । अत्र भुजेषु स्तम्भत्वारोपणेन रूपकोत्प्रेक्षयोः संकरः ॥ ३९ ॥

**दिक्पालानां वरेण्यं वपुरसुरवधे दीक्षितान्क्षत्रियाणां**
**जन्मक्षेत्राणि बाहून्हृदि वहत बहूकृत्य भृत्यप्रियस्य ।**
**लोकानां पालनायै नियममुपयतां शात्रवत्रासकानां**
**ज्ञातं राज्ञां स्वकीयप्रभवगुणभवो लोकपालानुभावः ॥ ४० ॥**

**दिक्पालानामिति ।** दिक्पालानामिन्द्रादीनां वरेण्यं वपुः श्रेष्ठं शरीरमिन्द्रादीनां पराजयेपि स्वकारणभुजानां पराजयाभावाद्वरेण्यत्वम् । 'इन्द्रादयो बाहव आहुरुस्राः' इति श्रीभागवतोक्तेः । असुरवधे दैत्यहननरूपयागे दीक्षितान्संजातदीक्षान् । दीक्षितस्य प्रतिवर्षं परिलम्भनाद्बाहूनां दैत्यवधावश्यम्भावात् । क्षत्रियाणां जन्मक्षेत्राणि 'बाहू राजन्यः कृतः' । इति श्रुतेः । भृत्यप्रियस्य भक्तवत्सलस्य बाहून्बहूकृत्य सत्कृत्य हृदि वहत

पूजापूर्वकं भावयत इत्यर्थः। लोकपालानां पालनायै रक्षणार्थं नियममुपयतां प्राप्तवतां 'राज्ञो हि परमो धर्मः प्रजापालनमुत्तमम्।' इति श्रुतेः। शात्रवत्रासकानां शत्रुभयजनकानां 'दस्युशात्रवशत्रवः' इत्यमरः। राज्ञां लोकपालानुभावः लोकपालरूपः प्रभावः स्वकीय-प्रभवगुणभवः स्वप्रभवः स्वकारणं बाहवः तद्गुणः दुष्टनिग्रहशिष्टपालनरूपः तज्जन्य इति ज्ञातम्। 'कारणगुणाः कार्ये संक्रामन्ति' इति न्यायात्। यद्वा 'अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः' इति श्रुतेः। लोकपालानुभावः लोकपालानामिन्द्रादीनामनुभावः ऐश्वर्यतेजोधरत्वादिः स्वप्रभवगुणभवः स्वसमानकारणगुणजन्यः। यथा लोके एकक्षेत्रजानां शस्यानां समानगुणत्वं तद्वदिति भावः। इति ज्ञातम्। अत्रोत्प्रेक्षालङ्कारः॥ ४०॥

**दृप्यद्दुर्दान्तदैत्यर्षभदमनसहं भूरिभारातुराया-**
**स्ताद्दृग्विश्वम्भराया द्रढिमबलमवष्टम्भयोग्यं दधानान्।**
**ध्यायेद्योगर्द्धिसिद्ध्यै त्रियुगभुजयुगान्सांयुगीनारिहन्तुः**
**किंवा कालात्मनोऽस्यावयवयुगयुगद्वन्द्वरूपानुरूपान्॥ ४१॥**

**दृप्यद्दुर्दान्त—इति**। दृप्यतां दृप्तानां दुर्दान्तानां दुर्दमानां दैत्या एव ऋषभा वृषाः तेषां दमनसहं बलहान्या पुनःपुनर्बन्धने शिक्षाप्रदं युगानां दुष्टबलीवर्ददमन-कारकत्वात्। तद्वत्। यथा दमनसहत्वं तथा महाभारवहनसहत्वं च। भूरिभारातुरायाः दुष्टदैत्यभारखिन्नायाः विश्वम्भरायाः पृथिव्याः अवष्टम्भयोग्यमवलम्बनयोग्यं द्रढिमा दार्ढ्यं तद्रूपं बलं दधानान्। युगानामतिशयभारवहनक्षमत्वात्। त्रियुगभुजयुगांस्त्रियुगः सत्यादियुगत्रये नानावतारैः प्रकाशमानः श्रीनारायणः तस्य 'छन्नः कलौ यद्भवांस्त्रियुगोथ सत्त्वम्' इति श्रीभागवतोक्तेः। यद्वा त्रीणि युगानि ऐश्वर्यादीनि षट् यस्य। 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना।' इति स्मरणात्। भगवतः भुजा एव युगा रथशकटादिकर्षणार्थमश्वबलीवर्दादिस्कन्धमध्यस्थानि स्थूलवृत्तनिर्मितकाष्ठानि तान्योगर्द्धिसिद्ध्यै समाधिसंपत्तिजन्यसिद्धिप्राप्तये ध्यायेत्। किंवा पक्षान्तरेण सांयुगीनारिहन्तुः रणसाधुशत्रुहन्तुः अत एव तेषां कालात्मनः कालवत्संहारकस्य। 'कालोस्मि लोकक्षयकृत्प्रवृद्धः' इति गीतोक्तेः। स्वतः कालात्मनः श्यामस्वरूपस्य। 'मासानां मार्गशीर्षोहमृतूनां कुसुमाकरः।' इति मासर्तुसमष्टि-

परार्द्धाभिन्नकालस्वरूपस्य अस्य नारायणस्य अवयवरूपाणां युगानां सत्यप्रभृतीनां युगद्वन्द्वं युगयुग्मं चतुष्टयं तद्रूपस्य तत्स्वरूपस्य अनुरूपान्कालावयविनो भगवतः स्वावयवभूत-सत्यादियुगचतुष्टयरूपानिति भावः । भुजान्ध्यायेदित्यन्वयः । रूपकालंकारः ॥ ४१ ॥

अथ द्वाभ्यां द्विगुणसौन्दर्याकरान्करान्वर्णयति—

**दोर्वृन्देन्दीवरस्रक्चयचरमचराम्भोजचातुर्यभाजां**
**ध्यायेच्चातुर्भुजानां विधिनिटिललिपेरुत्किराणां कराणाम् ।**
**क्ष्मालक्ष्म्योश्चारुगारुत्मतकनकघटाटोपवत्सु स्तनेषु**
**न्यस्ता ये भद्रकुम्भोपरिपरिविलसत्पल्लवत्वं भजन्ते ॥ ४२ ॥**

**दोर्वृन्देति** । दोर्वृन्दमेव इन्दीवरस्रक्चयः नीलोत्पलमालाकुलं तस्य चरमचराणा-मन्तिमभागभाजामम्भोजानां यच्चातुर्यं विन्यासकौशलं तद्भजन्तीति तेषाम् । मालाकाराः यैः समानवर्णनपुष्पैः मालां ग्रथ्नन्ति तत्र तदितरवर्णपुष्पगुच्छं मूले विन्यस्यन्तीति लोके प्रसिद्धिः । विधिनिटिललिपेः तादृशैश्वर्यव्यञ्जकललाटाक्षरपङ्क्त्याः उत्किराणामुट्टङ्कनकर्तॄणां चराचरसदसल्ललाटलिपिलेखकस्य चतुर्मुखस्य परमेष्ठिसूचकनिटिलाक्षरविन्यासाक्षरचणानां चातुर्भुजानां नारायणस्य संबन्धिनां युगपच्चतुर्मुखललाटलिपिलेखकसामर्थ्यव्यञ्जकत्वाच्चातु-र्भुजानामिति परिकरालङ्कारः । कराणां ध्यायेत् । करान्ध्यायेदित्यर्थः । स्मृत्यर्थत्वात्कर्मणि षष्ठी । क्ष्मालक्ष्म्योः क्षितिरमादेव्योः श्यामपीतवर्णत्वाच्चारूणां गारुत्मतकनकघटानां चतुर्णां य आटोपः आरम्भः तद्वत्सु तद्वद्घटसदृशेषु स्तनेषु संभोगसमये न्यस्ता निहिता ये कराः भद्रकुम्भोपरि परि सर्वतः विलसच्छोभमानं यत्पल्लवत्वं तल्लभन्ते । त्रिजगन्मङ्गल-क्ष्मालक्ष्मीकुचकुम्भपल्लवभावं वहन्तीति भावः । सर्वत्र परिकरालङ्कारः ॥ ४२ ॥

**कर्तुं मुक्तीश्चतस्रः स्वरुचिसमुचितं योगिसाध्यौगपद्ये-**
**नोद्यच्छन्तः पुमर्थापणिकविपणयः पाणयोऽजस्य भाव्याः ।**
**यैर्मुष्टीमुष्टिरुष्टैरपि युधि मधुना कैटभेनापि सार्द्धं**
**ताभ्यां स्रष्टुः शिरोभ्यो वितरितुमभयं बद्धमुष्टित्वमौज्झि ॥ ४३ ॥**

**कर्तुमिति** । चतस्रः मुक्तीः 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं

न गृह्णन्ति विना मत्सेवनं जनाः ॥' इति मुक्तेः पाञ्चविध्यं श्रीभागवतोक्तं तत्र एकत्वस्य सायुज्यमुक्तेः भक्तैरनादराच्चतस्र इत्युक्तम्। स्वरुचेः स्वाभिलाषस्य समुचितं यथा तथा भक्तश्रद्धानुरूपं योगिसाद्योगिनामधीनाः कर्त्तुं यौगपद्येन एकदा उद्यच्छन्तः उद्यताः पाणीनां चातुरूप्यात्। पुमर्थानां धर्मार्थकाममोक्षाणामापणिकाविपणयः वणिक्पण्यसरणयः भक्तिमूल्येन धर्मादिपण्यक्रयस्थानानि अजस्य श्रीनारायणस्य पाणयः कराः भाव्याः चिन्त्याः। युधि युद्धे मधुना कैटभेनापि सार्द्धं ताभ्यां सह मुष्टीमुष्टिरुष्टैः मुष्टिप्रहारयुद्धकुपितैः यैः पाणिभिः ताभ्यां मधुकैटभाभ्यां सकाशात्स्रष्टुः ब्रह्मणः शिरोभ्यः अभयं मधुकैटभा-भयाभावं वितरितुं दातुं बद्धमुष्टित्वमौज्झि त्यक्तम्। मधुकैटभयुद्धे बद्धमुष्ट्योपि ब्रह्माभयदाने सरला बभूवुरिति भावः। मुष्टिबन्धनसमये मुष्टित्यागः कुत इति विरोधः॥ ४३ ॥

अथैकेन श्लोकेन सुषमाद्वैतभाजामङ्गुलीनां वर्णनमारभते—

**आबद्धा यानधोधो भृशमनिशमपां रत्नरोचिर्मयीणां**
**पूर्णा स्वर्णालवालावलिरिव कलिता भार्मणी सोर्मिकाली।**
**विद्वत्पूज्यस्य रज्यन्नखमृदुलदलानङ्गुलीभङ्गियुक्ता-**
**नारक्तान्भक्तवाञ्छाघटनसुरविटप्यङ्कुरान्संस्मरेत्तान्॥ ४४ ॥**

**आबद्धेति**। यानधोधः। आम्रेडिताधःशब्दयोगे द्वितीया। आबद्धा अनिशं रत्नरोचिर्मयीणामङ्गुलीयकखचितमणिकिरणरूपाणामपां भृशं पूर्णा। पूरणयोगे षष्ठी। भार्मणी भर्म स्वर्णं तत्संबन्धिनी सा प्रसिद्धा ऊर्मिकाली अङ्गुलीयकश्रेणी स्वर्णालवालावलिरिव हाटकावलिधाटिकेव कलिता गृहीता। रज्यन्तो रक्ता नखा एव मृदुलानि कोमलानि दलानि येषां तानङ्गुलीनां भङ्ग्या प्रकारेण युक्तानङ्गुलीरूपेण प्रतीयमानानित्यर्थः। आरक्तान् विद्वत्पूज्यस्य श्रुतिस्मृतिसकलशास्त्रज्ञपूज्यस्य श्रीनारायणस्य तान्प्रसिद्धान् भक्तानां वाञ्छाः धर्मार्थकाममोक्षभक्तयः तद्धटकांस्तत्संपादनार्थं पञ्चधोत्पन्नान्सुरविटप्यङ्कुरान्सुरा एव विटपाः शाखाविस्ताराः विद्यन्ते यस्य सः सुरविटपी नारायणः स एव कल्पद्रुमः तस्याङ्कुरान्। 'इन्द्रादयो बाहव आहुरुस्राः' इति। 'पर्यस्तकोदण्डसहस्रशाखम्।' इति च श्रीभागवते। श्रीभगवद्भुजशाखानां देवरूपत्वात्सुरविटपित्वं तस्य संगतं तस्याङ्गुलीरूपानङ्कुरान्

संस्मरेत् । अत्र भगवदङ्गुलीषु कल्पद्रुमाङ्कुरारोपणाद्धार्मिकादिष्वालवालादिरूपणात्सावयवरूपकालङ्कारः ॥ ४४ ॥

अथ दशभिः श्लोकैः दशादिग्भयहरणानां चक्रादिप्रहरणानां वर्णनमारभते——

**कम्बुश्चक्रं च पाथोरुहमथ च गदा तेषु चिन्त्यानि कान्ता-**
**कम्बुग्रीवा-नितम्बाननपृथुलतरोरुप्रकाण्डाकृतीनि ।**
**जानीमो यान्यजस्रं निजकरकमलैस्तत्तदङ्गे प्रियाया-**
**श्चित्तासङ्गं दधानः कलयति कमलाकामुकः कामतातः ॥ ४५ ॥**

**कम्बुश्चक्रमिति** । तेषु पूर्ववर्णितेषु कम्बुः पाञ्चजन्यं चक्रं सुदर्शनमथ पाथोरुहं लीलापद्मं गदा च कौमोदकी । समुच्चयार्थं चकारद्वयम् । कान्तायाः श्रीदेव्याः कम्बुग्रीवा च त्रिरेखा कण्ठनाला नितम्बश्च कटिपश्चाद्भागः आननं च मुखं च पृथुलतरोरुप्रकाण्डश्च अतिशयेन पृथुः ऊरुरेव प्रकाण्डः प्रकाण्डसदृशः ऊरुः सक्थि तेषामाकृतिरिव आकृतिर्येषां तानि कम्बुसादृश्यं ग्रीवायाः चक्रसादृश्यं नितम्बस्य गदासादृश्यमूरोः एवं क्रमेण ग्रीवादिसादृश्यमस्ति । कम्ब्वादीनि चिन्त्यानि ध्येयानि । कमलाकामुकः कामुकत्वेपि इतरवत्कामाभिभवं दर्शयति । कामतात इति पुत्रस्य तातानभिभावकत्वात् । श्रीनारायणः प्रियाया लक्ष्म्यास्तत्तदङ्गे कम्बुग्रीवाद्यवयवे चित्तासङ्गं हृदयासक्तिं दधानः सन्निजकरकमलैः यानि अजस्रं कलयति गृह्णाति इति जानीमः प्रतीमः । कामुकाः नित्यं कान्तास्फूर्त्तये तदङ्गसदृशं किमपि कलयन्तीति प्रसिद्धम् । अत्र कम्ब्वादीनां कान्ताकम्बुग्रीवाद्यङ्गस्मृतिजनकत्वेपि न स्मृतिमदलङ्कारः ॥ ४५ ॥

**चक्रं चिन्त्यं प्रपीतामृतरससहितं लोहितं राहुकण्ठा-**
**त्पीत्वेवाकुण्ठितायुः स्फुरति न च जराजर्जरा यस्य धारा ।**
**यन्मध्यं वाहिनीनां न्यविशत शतशः स्पर्धमानारिमूर्ध-**
**च्छद्मान्याच्छिद्य पद्मान्यमरजनमुदे स्राक्स्रजः स्रक्ष्यमाणम् ॥ ४६ ॥**

**चक्रं चिन्त्यमिति** । अत्र अङ्गोपाङ्गायुधाकल्पमिति पूर्वोक्तरीत्या चक्रादीनां

भगवदङ्गत्वेन प्रथमं श्लोकद्वयेन चक्रं वर्णयति–चक्रमिति । श्रीनारायणस्य करस्थितं चक्रं सुदर्शनाख्यं चिन्त्यं यस्य धारा राहुकण्ठात्प्रपीतामृतरससहितं लोहितं पीत्वेवाकुण्ठितायुः चिरायुः जराजर्जरा न स्फुरति सुधापानाच्चिरायुस्त्वजराभावौ प्रसिद्धौ यथोक्तं श्रीशंकरस्वामिभिः- ‘सुधामप्यास्वाद्य प्रतिभयजरामृत्युशमनीम्’ इति । यच्चक्रं स्पर्धमानानामरीणां दैत्यानां मूर्धान एव छद्म येषां तानि तद्रूपाणि पद्मानि आच्छिद्य छित्वा अवचित्य च अमरजनमुदे स्राक् शीघ्रं स्रजः स्रक्ष्यमाणं ‘लक्षणहेत्वोः क्रियायाः’। ‘लृटः सद्वा’ इति हेतौ । वाहिनीनां सेनानां नदीनां च मध्यं न्यविशत प्राविशत् । ‘नेर्विशः’ इत्यात्मनेपदम् । अत्र श्लेषेण वाहिनीप्रवेशस्य नदीप्रवेशेन अरिमूर्धाहरणस्य च पद्माहरणेन रूपणात्तदुत्थापितोत्प्रेक्षा इवादिपदाभावात्सा च गम्या ॥ ४६ ॥

**चक्रं शक्रारिशत्रोर्विमृशतु मनसा लालसोल्लासलोलै-**
**र्ज्वालाजिह्वासहस्रैः प्रकटितविकटाटोपतर्षप्रकर्षम् ।**
**दैत्यासृक्सिन्धुसंघैः किल कलसजनिं जेतुमापीयमानै-**
**र्यस्याल्पाप्यार्द्रता नाभ्युदयति हृदये रोषशुष्मोष्मशुष्के ॥ ४७ ॥**

**चक्रमिति** । लालसायाः महातृष्णाया उल्लासेन उद्रेकेण अतिशयेनेत्यर्थः । लोलैश्चञ्चलैः ज्वाला एव जिह्वास्तासां सहस्रैः प्रकटितः प्रकाशितः विकटाटोपः भीषणारम्भः तर्षप्रकर्षः तृष्णातिशयः येन तत् । शक्रारिशत्रोः दैत्यारेः श्रीनारायणस्य चक्रं सुदर्शनं मनसा विमृशतु । अत्र विमर्शः स्मरणम् । स्मरतु भक्त इति शेषः । कलसजनिमगस्त्यं जेतुमेकसिन्धुं पीतवन्तं तिरस्कर्त्तुमानीयमानैः अतिशयेन पीतैः दैत्यासृक्सिन्धुसंघैः अनेकासुररुधिरसागरैः रोषशुष्मा क्रोधाग्निः तस्य ऊष्मणा संतापेन शुष्के यस्य हृदये तद्रूपे मध्ये च अल्पापि आर्द्रता सरसत्वं दैत्यहनने दयार्द्रता च नाभ्युदयति नोदेति सुदर्शनस्य धारायां तच्छिन्नानेकमहासुरासृक्सिन्धवः शुष्यन्ति कुतो वा मध्यदेशमीयुरिति भावः । अत्रानेकासृक्सिन्धुपानस्य कलसजनिजयेनोत्प्रेक्षणाद्धेतोः उत्प्रेक्षा साच पानातिशयेपि हृदयानार्द्रत्वविरोधेन संकीर्णा ॥ ४७ ॥

**शङ्खं तं खल्वधीयात्प्रलयघनघटागर्जितोर्जस्विघोषै-**
**र्यः कृत्वानेककृत्वोनुसमरमसुहृद्गार्भिणभ्रूणहत्याः ।**

**प्रायश्चित्तं विधत्ते विधिविहितमरुत्पूरणेन प्रयत्ना-**
**त्प्राणायामप्रयासी प्रणवगुणनिकासादरः सूक्ष्मनादैः ॥ ४८ ॥**

**शङ्खमिति** । तं शङ्खं पाञ्चजन्यं खलु निश्चितमधीयात्स्मरेत् । अधिपूर्वस्य 'इक् स्मरणे' इति धातोर्लिङि रूपम् । यः प्रलयघनघटागर्जितोर्जस्विघोषैः प्रलयाब्दस्वनितैः अनुसमरं युद्धमनु लक्षीकृत्य असुहृदां दैत्यानां यद्गार्भिणं गर्भिणीसमूहः तस्य भ्रूणाः गर्भस्थजन्तवः तेषां हत्या हननानि अनेककृत्वः बहुवारान्कृत्वा विधिना दैवेन यदृच्छया विहितं यन्मरुत्पूरणं विधिना शास्त्रोक्तेन पूरककुम्भकरेचकविधानेन विहितं मरुत्पूरणं तेन हेतुना सूक्ष्मनादैः श्रीभगवन्मुखपूरणाभावेपि दैवादितरमरुत्पूरणध्वनिभिरित्यर्थः । प्रणवस्य गुणनिका पुनःपुनरावृत्तिः तस्यां सादरः प्रयत्नात्प्राणायामे प्रयासी प्रयासयुक्तः सन्प्रायश्चित्तं विधत्ते इव इत्युत्प्रेक्षा । पापहरणप्रायश्चित्ते मनुनोक्तं यथा—'तिलहोमा देव्ययुतं प्राणायामशतत्रयम् । समुद्रगानदीस्नानं सममेतच्चतुष्टयम् ॥' इति । 'सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश । अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः ॥' इति च । अत्र इवादिपदाभावेन गम्योत्प्रेक्षा । भ्रूणहत्याप्रायश्चित्तासम्बन्धेपि तत्संबन्धदर्शनादतिशयोक्तिश्च ॥ ४८ ॥

**सौरभ्यारभ्यमाणर्द्धिभिरधरसुधासाधुमाधुर्यधुर्यैः**
**पीतैः पीताम्बरस्यास्यवनजपवनैर्निर्भरं पूर्णगर्भः ।**
**रूक्षासृग्बस्तरक्षोसुपवनपिबतापीवरीं वर्वरीं वा**
**कामं कौमोदकीं यो हसति स मनसा कम्बुराट् चुम्बनीयः ॥ ४९ ॥**

**सौरभ्येति** । सौरभ्येण आरभ्यमाणर्द्धिभिः सौगन्धारब्धसमृद्धिभिः अधरसुधासाधुमाधुर्यधुर्यैः अधरसुधामधुरिमधूर्वहैः पीतैः पुनःपुनरास्वादितैः पीताम्बरस्य श्रीनारायणस्य आस्यमेव वनजं पद्मं तत्संबन्धिभिः पवनैः श्रीभगवन्मुखपवनस्य सहजसौरभ्याधरसुधामाधुर्यविशिष्टत्वेन पानातिरेकान्निर्भरमत्यन्तं पूर्णगर्भः यः रूक्षासृजां कठिनदेहत्वादस्निग्धासृजां बस्तो मेषस्तत्सदृशानां रक्षसां मालिसुमालिप्रभृतीनामसवः प्राणपवनाः तत्पिबता तत्पायित्वं पाधातोः शप्रत्यये पिबादेशः । तया पीवरीं पृथुलां कौमोदकीं वर्वरीं हस्तवलयादिविशिष्टघटनानतोन्नतां वर्वरस्त्रियं वा पामरस्त्रियमिव । इवार्थे वाशब्दः । 'वर्वरः पामरे केशे

चक्रले ना च दन्तुरे ।' इति मेदिनी । कामं यथेष्टं हसति । आवयोः श्रीभगवत्कर-स्थितिसाम्येपि ममेदृशं पानं तव तादृशं पानमतो मयि भगवत्पक्षपातो महीयानिति परिहसति । सः कम्बुराट् शङ्खराजः पाञ्चजन्यः मनसा चुम्बनीयः श्रीभगवदधरसुधापान-मधुरमूर्त्तितया कान्ताधरवच्चुम्बनेनास्वादनीयः । ध्येय इत्यर्थः । अत्र पाञ्चजन्यस्य कौमो-दकीहसनासंबन्धेपि तत्संबन्धवर्णनादतिशयोक्तिः ॥ ४९ ॥

एवं पृथग्वर्णयित्वा चक्रशङ्खौ सह वर्णयति—

**चक्रं वृक्णारिचक्रं परिचरतु धिया चण्डरुङ्मण्डलाभं**
**कम्बुं चाडम्बरेणानिभृतममृतरुग्बिम्बसंवावदूकम् ।**
**यौ कालिन्द्योघकल्पे हरिरुचिनिचये तस्य चक्षूभवन्तौ**
**स्नेहेन स्वानुबिम्बाविति किमुभयतः पश्यतः पुष्पवन्तौ ॥ ५० ॥**

**चक्रमिति** । वृक्णारिचक्रं छिन्नशत्रुसैन्यं चण्डरुङ्मण्डलाभं मार्त्तण्डमण्डलसदृशं चक्रं सुदर्शनमाडम्बरेण शोभारम्भेणानिभृतमनाच्छन्नं प्रकाशमानमित्यर्थः । नतु चन्द्र-वत्क्षीणम् । अमृतरुग्बिम्बसंवावदूकं शशिबिम्बसंवदनशीलं तज्जयिनमित्यर्थः । कम्बुं पाञ्चजन्यं च युगपत्सुदर्शनपाञ्चजन्यौ धिया ध्याननिष्ठबुद्ध्या परिचरतु सेवताम् । परिचरणं च ध्यानेन तच्छोभायां पुनः पुनः परिशीलनम् । भक्त इति शेषः । तस्य नारायणस्य चक्षूभवन्तौ । 'कृभ्वस्तियोगे संपद्यकर्त्तरि च्विः' इति च्विः । 'अरुर्मनश्चक्षुश्चेतो' इति चक्षुषोन्तषकारलोपः । 'च्वौ च' इति पूर्वस्योकारदीर्घः । नेत्रीभूतौ पुष्पवन्तौ सूर्याचन्द्रमसौ यौ चक्रकम्बू कालिन्द्योघकल्पे यमुनानीरपूरसदृशे हरिरुचिनिचये नारायण-कान्तिकदम्बे स्वानुबिम्बाविति निजप्रतिबिम्बाविति स्नेहेन उभयतः उभयपार्श्वयोः पश्यतः किमित्युत्प्रेक्षा ॥ ५० ॥

**ध्यातव्यं दिव्यमब्जं दितिजविजयिनो यत्सदेशस्पृशोऽब्ज-**
**श्रीसर्वस्वच्छिदोऽदोवदनपदजुषो भीतमम्भोजराजात् ।**
**नित्यं निद्रादरिद्रं विसृजति मधुनो विप्रुषोऽश्रूदबिन्दून्**
**बन्धुस्नेहानुबन्धात्करसरसिरुहाऽऽश्लिष्यताऽऽश्वास्यते च ॥ ५१ ॥**

**ध्यातव्यमिति** । अत्र पद्मस्यायुधत्वाभावेपि आकल्पत्वाद्वर्णनम् । दितिजविजयिनः श्रीनारायणस्य दिव्यमलौकिकं करस्थं लीलापद्मं ध्यातव्यम् । ध्यैधातोस्तव्यप्रत्ययः । यस्य सदेशं समानं देशं समीपं तत्स्पृशः स्वसमीपस्थादब्जानां यावत्पद्मानां श्रीसर्वस्वच्छिदः सकलसंपदपहारकादमुष्य श्रीनारायणस्य वदनपदजुषः तदभिन्नादम्भोजराजात्पद्मसार्वभौमाद्भीतं यत्पाणिस्थितं पद्मं नित्यं निद्रादरिद्रं सत् दिव्यत्वान्नित्यविकसितं भीतत्वान्निद्राशून्यत्वं च मधुनो मकरन्दस्य विप्रुषो बिन्दून् ता एव अश्रूदबिन्दूनश्रुजलकणान् विसृजति त्यजति । व्यस्तरूपकम् । भीत्या रोदितीत्यर्थः । करसरसिरुहा भगवत्पाणिपद्मेन बन्धुस्नेहानुबन्धाद्बान्धवप्रेमसंबन्धात् । बन्धुत्वं च स्वकान्तिसदृशकान्तिमत्त्वम् । आश्लिष्यता आलिङ्गता आश्वास्यते च । बन्धवो हि निजबन्धुं राजादित्रासविषण्णमाश्वासयन्ति । आश्वासनं च—वयं भगवदीयाः । अस्माकं परस्परभयं नास्ति मुखपद्मं च अस्मदतिरिक्तपद्मश्रीलुण्टाकमिति । अत्र इवादिवाचकाभावाद्गम्योत्प्रेक्षा ॥ ५१ ॥

**कञ्जं युञ्जीत चेतस्यजितकरसरोजाधिराजेन जित्वा**
**जीवग्राहं गृहीतं दलितमतितरां बाहुजप्रौढिभाजा ।**
**पुष्टाः सर्वस्वपोषं मधुरमधुभृतेरक्षमा बन्धमोक्षे**
**यस्यादूरे रुवत्यो भ्रमरपरिषदः संभ्रमेण भ्रमन्ति ॥ ५२ ॥**

**कञ्जमिति** । चेतसि कञ्जं श्रीनारायणपाणिस्थितं पद्मं युञ्जीत भावयेत्। तत्कीदृशम् ? बाहुजप्रौढिभाजा बाहुजन्यतोत्कर्ष एव बाहुजप्रौढिः क्षत्रियोत्कर्षः तद्भाजा । 'बाहुजः क्षत्रियो विराट्' इत्यमरः । अजितस्य श्रीनारायणस्य । साभिप्रायविशेषणत्वात्परिकरः । मधुकैटभादिजेतुः पुष्करविजयो न दुष्कर इति भावः । कर एव सरोजाधिराजः तेन जित्वा जीवग्राहं गृहीतम् । 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति कर्मणि णमुल् । अतितरां दलितं विकसितं जयेन प्रहारपीडितं च मधुरैः मधुभिः मकरन्दैः भृतेः भरणात्पोषणाद्धेतोः सर्वस्वपोषं पुष्टा सर्वस्वेन पुष्टा । 'स्वे पुषः' इति करणे णमुल् । भृत्युपकाररूपे बन्धमोक्षे भगवत्करग्रहणमुक्तिरूपे अक्षमाः असमर्थाः भ्रमरपरिषदः भृङ्गसमूहाः रुवत्यः सत्यः भ्रमरझङ्कारस्वनेनेति भावः । यस्य अदूरे समीपे संभ्रमेण त्वरया भ्रमन्ति । बलवता स्वप्रभौ गृहीते तदनुजीविनः तन्मोचनासमर्थाः तत्समीपे रुदन्तीति भावः । इयमपि गम्योत्प्रेक्षा ॥ ५२ ॥

**पीत्वा मांसोपदंशं युधि रुधिरसुरां पाव्यमानासुरोरः-**
**पट्टव्याघट्टघोषाट्टहसितविकटं क्षीबभावान्नटन्ती ।**
**या प्रीतिं प्रेतभर्तुर्व्यधित धृतवसालेपनेपथ्यरौद्री**
**तस्या ध्यायेदसाध्याहितहृदयगदाभोगदाया गदायाः ॥ ५३ ॥**

**पीत्वेति** । युधि मांसेन उपदंशं रुधिररूपां सुरां पीत्वा असुराणामिति शेषः । 'उपदंशस्तृतीयायाम्' इति णमुल् । दश्यमानस्य मांसस्य प्रीतिं प्रति करणत्वात्तृतीया । मद्यपाः किंचिदुपदश्य पानं कुर्वन्तीति प्रसिद्धम् । क्षीबभावान्मत्तत्वात्पाव्यमानानि यानि असुरोरःपट्टानि कठिनकैटभादिदैत्यवक्षःफलकानि तेषु यो व्याघट्टः प्रहारवेगेन पुनः पुनः संघट्टः तेन यो घोषः स एव अट्टहसितं मदिरापानानुभावरूपं तेन विकटं भयङ्करं यथा यथा नटन्ती प्रहारचातुर्यादिति भावः । या गदा धृतं वसालेपनेपथ्यं दैत्यहृन्मेदःपङ्कोपदेहप्रसाधनं तेन रौद्री भीषणा । मत्ता हि भूमिलुठनादिना पङ्कलिप्ता भवन्ति । प्रेतभर्तुः यमस्य कस्यचिद्राज्ञश्च प्रीतिं व्यधित विहितवती । यमस्य स्वपुरागतदैत्यप्रेतबाहुल्येन स्वाधिकाराधिक्यादसाध्याः अन्यैः हिंसितुमशक्या ये अहितास्तेषां हृदये गदाभोगः चिन्तारूपः रोगातिशयः तं ददातीति सा तस्याः गदायाः कौमोदक्याः ध्यायेत् । तां ध्यायेदित्यर्थः । अधीगर्थत्वात्कर्मणि षष्ठी । अत्र सावयवो रूपकालङ्कारः ॥ ५३ ॥

**भ्राम्यन्ती दिष्टगत्याऽहितवृषपिशितं प्राश्य मातङ्गकुम्भात्**
**पीत्वा चाजौ मदाम्भस्तदनुशययुता या नखांशुच्छलेषु ।**
**स्नान्ती गङ्गाजलेषु व्रतयितुमिव तद्योषितां गोपयोधोक्**
**प्रायश्चित्तं भजन्तीं[1] महयतु महतीं तां गदां धर्मसेतोः ॥ ५४ ॥**

**भ्राम्यन्तीति** । दिष्टगत्या अनेन पथा गत्वा इमं मारयेति भगवता दिष्टा आज्ञप्ता या गतिस्तया दैवगत्या च सर्वस्य दैवाधीनत्वात् । ये आजौ युद्धे अहितवृषाः अहितेषु वृषा इव वृषभा इव उभयथा शत्रुश्रेष्ठाः तेषां पिशितं मांसं तदेव । अहितं पातकोत्पादनात् वृषपिशितं गोमांसमित्यर्थः । प्राश्य खादित्वा मातङ्गकुम्भात्करिशिरोमांसपिण्डाच्चाण्डालघटाच्च

---

१ चरन्तीमिति पाठष्टीकानुमतः ।

'चाण्डालप्लवमातङ्ग—' इत्यमरः । मदाम्भः दानजलं मादकमम्भः अम्भःसदृशं मद्यमित्यर्थः । पीत्वा स्वाघातस्फुटितशत्रुवक्षोगजकुम्भमांसदानानां स्वस्मिन् लेपनं प्राशन-पानतया उत्प्रेक्षितम् । तथा च भगवत्पाणिप्रेरणेन रणगतदैत्यवक्षःपाटनतदीयगजकुम्भ-स्फोटनादिकं कृत्वा तदनु तदनन्तरं शययुता हस्तयुक्ता सती 'पञ्चशाखः शयः पाणिः' इत्यमरः । अन्यत्र पक्षे तदनुशययुता ताभ्यां गोमांसभक्षणमद्यपानाभ्यां यः अनुशयः पश्चात्तापः तेन युता 'अहो मया इदमकर्त्तव्यं कृतम्' इति अनुतप्ता सती पश्चात्तापस्य पापनाशकत्वात् । यथाह मनुः—'कृत्वा पापं हि संतप्य तस्मात्पापात्प्रमुच्यते । नैतत्कार्यं पुनरिति निवृत्त्या पूयते तु सः ॥' इति । नखांशुच्छलेषु निजधारककरनखर-करकपटेषु तदभिन्नेष्वित्यर्थः । गङ्गाजलेषु स्नान्ती गङ्गाजलस्य परमपावनत्वात् । तथा महाभारते—'अपि चाण्डालभाण्डस्थं यज्जलं पावनं महत् । सेयं गङ्गा कुरुश्रेष्ठ यथेष्टमवगाह्यताम् ॥' इति । व्रतयितुमिव व्रतं कर्त्तुमिव तद्योषितां रणहतदैत्यस्त्रीणां गावः दृष्टयः नेत्राणि ता एव गावः धेनवः तासां पयः अश्रुजलमधोग्दुदोह । यथाह मनुः—'तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान् । प्रतित्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः ॥' 'अपां पिबेत्तु त्रिपलं त्रिपलं तु पयः पिबेत् ।' एवं ध्यानातिशयेन प्रायः बाहुल्येन चित्तं चरन्तीं गच्छन्तीं ध्याताम् । अन्यत्र प्रायश्चित्तं पापापनोदनविधिं चरन्तीमाचरन्तीं गङ्गाजल-स्नानपयोव्रतयोः पापनाशकत्वात् । महतीं दीर्घां प्रायश्चित्तवशात्पूज्यां च धर्मसेतोः धर्ममर्यादास्थापकस्य श्रीनारायणस्य गदाप्रायश्चित्तकारकत्वेन साभिप्रायं विशेषणम् । तां गदां महयतु पूजयतु भक्त इति शेषः । अत्र श्लेषोत्थापितो रूपकालङ्कारः । प्रायश्चित्तध्वनिः ॥ ५४ ॥

अथ श्लोकत्रयेण रेखात्रयविशिष्टस्य श्रीनारायणकण्ठस्य वर्णनमारभते—

**सोत्कर्षः कङ्कणाङ्कैः सरसिजवसतेरश्लथाश्लेषमग्नै-**
**र्वैकुण्ठाधीशकण्ठः स्फुटदरसुषमानादरो भावनीयः ।**
**यत्सौभाग्याभिभूतो निजनिकटचरः पाञ्चजन्योपि चिन्ता-**
**जन्यं शून्यान्तरत्वं प्रकटयतितरां पाडुभूयं च भूयः ॥ ५५ ॥**

**सोत्कर्षमिति** । सरसिजवसतेः पद्मालयायाः अश्लथाश्लेषेण गाढालिङ्गनेन मग्नैः

निम्नैः कङ्कणाङ्कैः वलयचिह्नैः सोत्कर्षः तादृशोत्कर्षस्य रसिकसौभाग्यव्यञ्जकत्वात् । स्फुटः दरस्य सत्रिरेखदक्षिणावर्त्तशङ्खस्य सुषमायाः अनादरो यस्मात्सः वैकुण्ठाधीशस्य श्रीनारायणस्य कण्ठः भावनीयः । दरसुषमानादरमाह—यदिति । यत्सौभाग्येन लक्ष्मी-भुजाश्लेषकटकलाञ्छनलाभरूपेण अभिभूतः तिरस्कृतः तत्र तस्याभावात् । निजस्य निकटचरः पार्श्वस्थः पाञ्चजन्यः आकृत्या तत्सदृशः अपि स्निग्धत्रिरेखवृत्तोज्ज्वलत्वादि-वैशिष्ट्येपि लक्ष्मीभुजाश्लेषप्राप्त्यभावेन चिन्ताजन्यं शून्यान्तरत्वं सच्छिद्रमध्यत्वं स्वसदृशाभिभवे इतिकर्त्तव्यतामूढत्वं भूयः पुनःपुनः पाण्डुभूयं पाण्डुत्वं च चिन्तानुभवद्वयमेतत्प्रकटयतितरा-मतिशयेन प्रकटयति । अत्र पाञ्चजन्यस्य स्वतःसिद्धशून्यान्तरत्वपाण्डुत्वयोः भगव-त्कण्ठाभिभवजन्यचिन्तानुभवित्वेनोत्प्रेक्षा सा च व्यञ्जकाभावाद्गम्या ॥ ५५ ॥

**त्रय्याः संचारपद्या इव निजवचसस्तां त्रिरेखां दधाने**
**सोत्कण्ठं कण्ठदेशे दिशतु किल मतिं केलिकण्ठीरवस्य ।**
**अध्वन्या सिन्धुकन्यादृगधिरुचितया यत्र चित्रीयमाणे**
**चित्रायां प्राप्य यात्रामिव नहि पुनरावर्त्तते मोदमाना ॥ ५६ ॥**

**त्रय्या इति** । निजवचसः स्वसरस्वतीरूपायाः त्रय्याः वेदत्रयस्य संचारपद्या इव संचारसरणीरिव तां महापुरुषलक्षणव्यञ्जकां त्रिरेखां रेखात्रयं दधाने केलिकण्ठीरवस्य क्रीडानरसिंहमूर्त्तेः श्रीनारायणस्य कण्ठदेशे सोत्कण्ठं सौत्सुक्यं मतिं दिशतु ददातु । भक्त इति शेषः । ध्यायेदित्यर्थः । किलेति प्रसिद्धौ । अधिरुचितया अधिककान्ति-मत्त्वेन चित्रीयमाणे विस्मापयमाने । 'नमोवरिवश्चित्रङः क्यच्' इति क्यच् । यथा नरहरिरूपे कण्ठस्यातिशोभनत्वं मयानुभूतमेवं नारायणरूपेपीति लक्ष्म्या अद्भुतरसजनके चित्रीयमाणे चित्रानक्षत्रमिवाचरति यत्र अध्वन्या पान्थरूपा सिन्धुकन्यादृक् लक्ष्मीदृष्टिः चित्रायां तन्नाम्नि नक्षत्रे यात्रां गमनं प्राप्येव मोदमाना आनन्दिता तच्छोभादर्शनजनिताश्चर्य-रसमग्ना सती पुनर्नावर्त्तते ततो न बहिर्भवति हि निश्चितं न ह्यावर्तते वा भगवत्सौन्दर्यस्य तथात्वात् । तथा च श्रीभागवते—'प्रत्याकृष्टुं नयनमबला यत्र लग्नं न शेकुः' इति । चित्रागमनफलं ज्यौतिषे—'नन्दन्ति न निवर्त्तन्ते चित्रास्वात्योर्गता नराः ।' इति । अत्र नयनस्य भगवत्कण्ठात्तत्सौन्दर्यदर्शनाश्चर्यादनावर्त्तनं चित्रानक्षत्रगमनफलत्वेनोत्प्रेक्षितम् ॥५६॥

**अर्चिर्वर्त्माध्वनीना वरवचनमयान्यद्ध्वनीनात्मनीना-**
**नीहन्ते यं पवित्रं विरचयति जनो दीर्घदर्श्यर्घ्यपात्रम् ।**
**भक्तानां भागधेयाब्धित उदितवतो मुक्तिमुक्ताप्रसूते-**
**स्तस्यादःकण्ठकम्बोः शुभविभवभुवोऽध्येतु मध्येसमाधि ॥ ५७ ॥**

**अर्चिर्वर्त्मेति** । अर्चिर्वर्त्मनि 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।' इति गीतोक्तेः अर्चिर्मार्गे देवयाने अध्वनीनाः 'अध्वनो यत्खौ' इति खप्रत्ययः । पथिकाः भगवत्प्राप्तये जिगमिषन्तः वरस्य श्रेष्ठस्य भगवतः वचनं वेदः तन्मयान् तत्स्वरूपान् यस्य कण्ठस्य ध्वनीन् बृहदारण्यकप्रोक्तार्चिर्मार्गप्रतिपादकानात्मनो हितानात्मनीनान् 'आत्मन्विश्वजन—' इति खप्रत्ययः । गमनसमये शङ्खध्वनेः गमनप्रयोजनसाधकत्वात् । यद्वा 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥' इति शिष्टोक्त्या प्रणवस्य कण्ठध्वनित्वं तस्मात् 'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥' इति गीतोक्तेः प्रणवः आत्मनीनः । ईहन्ते इच्छन्ति । दीर्घदर्शी विद्वाञ्जनः पवित्रं यमर्घ्यपात्रं विरचयति शङ्खस्य अर्घ्यपात्रप्रसिद्धेः । अर्घस्य पूजाविधेः पात्रं भाजनं तद्योग्यमित्यर्थः । 'मूल्ये पूजाविधावर्घः' इत्यमरः । अत्र पूजा ध्यानमेव 'ध्यानयज्ञास्तथापरे' इति गीतोक्तेः । भक्तानां भागधेयाब्धितः भाग्यसिन्धोः उदितवतः उत्थितस्य । शङ्खस्य सिन्धूत्पत्तिः प्रसिद्धा । मुक्तिमुक्ताप्रसूतेः मोक्षमौक्तिकजनकस्य । शङ्खस्य मुक्ताजनकत्वं रत्नशास्त्रे—'करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके' इति । अत एव शङ्खसादृश्यात् शङ्खकार्यस्य शुभविभवस्य शुभातिशयस्य भुवः उत्पत्तिस्थानस्य अदःकण्ठकम्बोः अमुष्य श्रीनारायणस्य कण्ठ एव कम्बुः तस्य तमित्यर्थः । मध्येसमाधि समाधिः ध्यानस्य पराकाष्ठा तन्मध्ये 'पारे मध्ये षष्ठ्या वा' इति अव्ययीभावः । अध्येतु स्मरतु । भक्त इति शेषः । 'अधीगर्थ—' इति षष्ठी । अत्र सर्वत्र रूपकालङ्कारः ॥ ५७ ॥

अथाकल्परूपत्वात्त्रिभिः श्लोकैस्त्रिगुणमायारूपां वैजयन्तीं वर्णयति—

**मोक्षश्रीवैजयन्तीं मुनिनियममुषः षड्द्विषस्तर्जयन्ती-**
**मन्तः स्वान्तं दधीतोदधिमधिशयितुर्वैजयन्तीं जयन्तीम् ।**

**लब्धश्रीशाङ्गसङ्गां मधुपृषतशतस्वेदसन्दोहसान्द्रां**
**यां वाजव्याजसज्जव्यजनमलिवधूराजयो वीजयन्ति ॥ ५८ ॥**

**मोक्षश्रीति** । मोक्षश्रियः वैजयन्तीं जयपताकां मुनीनां नियममुषः अहिंसादिधनतस्करान् षट् द्विषः कामादीन् शत्रूंश्च तर्जयन्तीं जयपताकायास्तर्जनहेतुत्वात् । अत एव जयन्तीं परमोत्कर्षेण वर्त्तमानामुदधिं समुद्रमधिशयितुः क्षीरोदधिशायिनः श्रीनारायणस्य 'अधिशीङ्स्थासां कर्म' इति आधारस्योदधेः कर्मत्वम् । वैजयन्तीमापादलम्बिनीं नानापुष्पमयीं मालाम् 'आपादलम्बिनी माला वैजयन्ती प्रकीर्त्तिता' इति गौतमीये । अन्तःस्वान्तं स्वान्तमध्ये 'अव्ययं विभक्ति—' इत्यव्ययीभावः । दधीत धारयतु ध्यायेदित्यर्थः । लब्धः श्रीशस्य अङ्गसङ्गो यया ताम् । एतेन वैजयन्त्याः स्त्रीत्वेन पुरुषसंभोगो ध्वनितः । मधुपृषतशतान्येव स्वेदसंदोहः तेन सान्द्रां यां पुष्पसौरभमिलितामलिवधूराजयः सखीरूपाः वाजव्याजेन उड्डयनचलितपक्षकपटेन सज्जव्यजनं चालिततालवृन्तं यथा तथा वीजयन्ति । संभोगश्रान्तस्वामिन्याः सखीतालवृन्तचालनकृतस्वेदापनयनमत्र ध्वनितम् । गम्योत्प्रेक्षेयम् ॥ ५८ ॥

**माला वैकुण्ठकण्ठग्रहमहबहुलामोदमभ्युल्लसन्ती**
**स्मार्या सिन्धोः कुमार्यास्तुलयितुमिव दोःसौकुमार्यं प्रगल्भाम् ।**
**यां पद्मासद्मपुष्टाः कलितकलकलाः पक्षलक्षेण पाणीन्**
**वारं वारं धुवत्यो मधुपयुवतयः साहसाद्वारयन्ति ॥ ५९ ॥**

**मालेति** । वैकुण्ठस्य नारायणस्य कण्ठग्रहमहे कण्ठाश्लेषोत्सवे बहुलामोदं प्रभूतानन्दं स्पर्शसुखानुभवाद्बहुसौरभ्यं च भगवदङ्गसौरभमिश्रणात् । क्रियाविशेषणम् । अभ्युल्लसन्ती शोभमाना माला वैजयन्तीनाम्नी स्मार्या ध्येया । सिन्धोः कुमार्याः लक्ष्म्याः दोःसौकुमार्यं भुजयुगमार्दवं भगवता निजकण्ठग्रहाधिकारे द्वयोरधिकृतत्वात् । तुलयितुमिव प्रगल्भां यां मालां पद्मासद्मसु पद्मेषु तद्गृहेषु च पुष्टाः मधुपयुवतयः दासीरूपाः कलितकलकलाः कलिताः गृहीताः कलस्याव्यक्तमधुरध्वनेः कलाः चातुर्याणि ता एव कलकलाः कोलाहलाः याभिस्ताः लक्ष्मीगृहपोषणेन तत्पक्षपातौचित्यात् । कलहं कृत्वेत्यर्थः । पक्षलक्षेण पक्षव्याजेन पाणीन्

ध्रुवत्य: सत्य: स्त्रीणां कलहे पाणिचालनप्रसिद्धेः साहसान् लक्ष्मीभुजसौकुमार्यतुलनारूपाद्वारयन्ति । 'विवादश्च विवाहश्च समयोरेव शोभते' इति न्यायात् । त्वं स्वानुरूपा इयमत्युत्कृष्टा युवयोः तुलनं न युक्तमिति वदन्तीति ध्वनितम् । अत्र मालायाः लक्ष्मीभुजसौकुमार्यतुलनासंबन्धेपि तत्संबन्धवर्णनादतिशयोक्तिः ॥ ५९ ॥

**भूतग्रामं चतुर्धा विरचयितुमलं पञ्चभूतस्वरूपां**
**पूज्यां वर्णैश्चतुर्भिः स्थितिचतुरतरैः पञ्चवर्णात्मिकां च ।**
**भेत्तुं चित्तं रमाया रतिरमणकृतां बाणसंपूर्णतूर्णीं**
**मालां ध्यायेत्तमामुत्तमकुसुममयीमप्रमेयात्मशक्तेः ॥ ६० ॥**

**भूतग्राममिति ।** भूतग्रामं भूतसमूहं चतुर्धा चातुर्विध्येन जरायुजाण्डजस्वेदजोद्भिज्जरूपेण विरचयितुमलं समर्थामित्यर्थः । पञ्चभूतस्वरूपां मालायाः पञ्चवर्णकुसुमरूपत्वेन पञ्चभूतवत्त्वोत्प्रेक्षा । उपासनाशास्त्रे वैजयन्त्या मायारूपत्वेन तस्याः पञ्चभूतकारणत्वात्कार्यकारणाभेदोक्तिः । स्थितिः स्वमर्यादा तस्यामतिचतुरैः स्वस्वधर्मस्थितैः चतुर्भिर्वर्णैः ब्राह्मणादिभिः पूज्यां पञ्चवर्णात्मिकां शुक्लनीलहरितपीतरक्तवर्णपुष्पाणां यथास्वघटनाकौशलेन निर्मितां रमायाः चित्तं भेत्तुं रतिरमणेन कामेन कृतां बाणसंपूर्णतूर्णीं कामबाणानां कुसुमरूपत्वान्मालायाः तत्कल्पितत्वाच्च । तामिव स्थिताम् । उत्तमकुसुममयीं कल्पद्रुमकुसुमकल्पिताम् । अप्रमेयात्मशक्तेः प्रमाणागोचरत्रिभुवनसृष्ट्यादिरूपसामर्थ्यस्य आत्मशक्तिर्माया वा मालारूपेण तद्धारणात् । तस्य मालां वैजयन्त्याख्यां ध्यायेत्तमामतिशयेन ध्यायेत् । 'तिङश्च' इति तिङन्तात्तमप्प्रत्ययः । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इति तमप आम् । अत्र भूतग्रामचतुष्टयविरचकत्वेपि पञ्चभूतात्मकत्वेन चतुर्वर्णपूज्यत्वेदि पञ्चवर्णात्मकत्वेन विरोधः । मालाया रमाचित्तभेदनार्थं कामस्य बाणपूर्णतूणीत्वेनोत्प्रेक्षा च । अत्र तयोरेकाश्रयस्थित्या संकरः ॥ ६० ॥

अथ षड्भिः श्लोकैर्लक्ष्मीषडिन्द्रियानन्दजनकं श्रीमुखं वर्णयति—

**चन्दन्मन्दस्मितेनोल्लसदधरपुटं किञ्चिदुत्फुल्लगण्डा-**
**भोगं भूयो विकासीक्षणकमलयुगं सान्द्रचन्द्रर्द्धिबाधि ।**

**श्वासामोदानुमोदानुसरदलिगणैर्गीतनासागुणौघं**
**स्वालेख्यालेख्यसद्भ्रूलतमथ वदनं दानवारेर्विभाव्यम् ॥ ६१ ॥**

**चन्दन्मन्देति** । अथ वैजयन्तीध्यानानन्तरं चन्दता आह्लादयता मन्दस्मितेन दरहासेन उल्लसच्छोभमानमधरपुटं यस्मिंस्तथोक्तम् । किञ्चिदुत्फुल्लः स्मितवशादुच्छूनः गण्डाभोगः कपोलाटोपः यस्मिंस्तत् । भूयोविकासि भक्तेषु करुणया मुहुर्विस्तीर्यमाण-मीक्षणकमलयुगं यस्मिंस्तथोक्तम् । सान्द्रचन्द्रस्य ऋद्धिं पूर्णचन्द्रशोभातिशयमिति यावत् । बाधते इति तथा । श्वासामोदानुमोदेन निःश्वाससौरभानन्देन अनुसरद्भिः अलिगणैः गीतः झङ्काररूपस्तुतिपदकदम्बेन उच्चारितः कमलादिदुर्लभसौरभास्पद-श्वासजनकरूपो नासागुणौघो यस्य तथा । स्वालेख्ये सुचित्रे आलेख्यमिव स्थिता सती भ्रूलता यस्मिन्नीदृशं दानवारेः वदनं विभाव्यं भक्तेनेति शेषः । अत्र स्वरूपोक्तिः ॥ ६१ ॥

**बिभ्रद्बर्हिर्मुखानां मुखमिति जनकस्यानुरूपं स्वरूपं**
**यद्भूर्ज्वालाह्वजिह्वः कवलयति हविर्जुह्वतां सप्तजिह्वः ।**
**विप्रः कव्यप्रियाणामपि लपनतया तृप्तये न्युप्तभोजी**
**न्यस्येदास्ये मनोस्मिन्निखिलमखभुजस्तस्य विश्वम्भरस्य ॥ ६२ ॥**

**बिभ्रदिति** । यस्माद्भवतीति यद्भूः यज्जन्मा 'मुखादग्निरजायत' इति श्रुतेः । जनकस्य मुखस्य पितुः अनुरूपं मुखपुत्रस्य मुखत्वौचित्यात् । बर्हिर्मुखानां देवानां मुखमिति स्वरूपं बिभ्रत् । ज्वालाह्वाः ज्वालानाम्न्यः सप्त जिह्वाः [1]कालीप्रभृतयो यस्य सः सप्तजिह्वः सप्तार्चिरग्निः जुह्वतां होतॄणां यज्वप्रभृतीनां हविः पुरोडाशादिकं कवलयति ग्रसति ज्वालारूपाभिः जिह्वाभिः इति भावः । उभयोः कवलनसाधनत्वात् । यद्भूः विप्रोपि 'ब्राह्मणोस्य मुखमासीत्' इति श्रुतेः । कव्यप्रियाणां पितॄणां लपनतया मुखत्वेन 'पृथिवी ते पात्रम्' इति मन्त्रेण 'ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि' इति ब्राह्मणमुखाधि-करणककव्यहवनश्रुतेः पितृतृप्तेर्ब्राह्मणमुखसाध्यत्वात्तस्य पितृमुखत्वम् । एतेनास्य

---

१ काली कराली च मनोजवा च सुलोहिता चैव सुधूम्रवर्णा । उग्रा प्रदीप्ता च कृपीटयोनेः सप्तैव कीलाः कथिताश्च जिह्वाः ॥

स्वजनकानुरूपस्वरूपत्वं ध्वनितम् । पितृतृप्तये न्युप्तानां पितॄनुद्दिश्य दत्तानां भोजी भोक्ता भवतीति शेषः । 'पितृदानं निवापः स्यात्' इत्यमरः । अत एव निखिलमखभुजः सकलयज्ञेषु दैवपित्र्येषु हव्यकव्यभुजः तस्माद्विश्वम्भरस्य सकलपोषकस्य 'देवान्भावयतानेन ते देवा भावयन्तु वः ।' इति गीतोक्तेः । 'प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हण-मुच्यतेज्या' इति श्रीभागवतोक्तेः भगवत्पूजायाः सर्वपूजारूपत्वात्तस्य श्रीनारायणस्य अस्मिन्देवपितृमुखदहननिजजनके आस्ये श्रीमुखे मनः न्यस्येत् निदध्यात् ध्यायेदित्यर्थः । अत्र न्यासस्य ध्यानेन तदेकनिष्ठत्वं बोध्यम् । अत्रोत्प्रेक्षा गम्या ॥ ६२ ॥

**रुद्रेण द्रुह्यमाणः किल कुसुमशरस्तत्प्रतीकारहेतो-**
**रस्मादुत्पत्स्यमानः सुहृदि निहितवाञ्जैत्रशस्त्राणि यत्र ।**
**राजीवे बन्धुजीवे दृगधरयुगले वज्रपुष्पं च नासां**
**पञ्चेषून्भ्रूधनुश्चार्पयतु मतिमिह श्रीमुकुन्दाननेन्दौ ॥ ६३ ॥**

**रुद्रेणेति** । रुद्रेण शिवेन स्वसमाधिभङ्गाद्द्रुह्यमाणः नेत्रानलदाहेन द्रोहं प्रापितः किलेति प्रसिद्धम् । कुसुमशरः कामः अत्र विशेष्यस्याभिप्रायत्वात्परिकरालङ्कारः । तस्य शिवस्य प्रतीकारहेतोः शङ्करवैरशुद्ध्यर्थं 'वैरशुद्धिः प्रतीकारः' इत्यमरः । अस्मान्नारायणा-च्छ्रीकृष्णावतारे प्रद्युम्नरूपेण उत्पत्स्यमानः बाणयुद्धे पित्रा सह भवपराभवार्थं जनिष्यमाणः । चन्द्रकन्दर्पयोर्मैत्रप्रसिद्धेः सुहृदि मित्रे यत्र श्रीमुकुन्दाननेन्दौ जैत्रशस्त्राणि त्रिभुवनजेतृणि शरशरासनानि । कानि तानीत्याकाङ्क्षायामाह—दृगधरस्य दृशोरधरयोश्च युगले द्वन्द्वात्परस्य युगलशब्दस्योभयसंबन्धाद्दृग्युगलं राजीवे पद्मे अधरयुगलं बन्धुजीवे बन्धूकपुष्पे नासां वज्रपुष्पं तिलपुष्पं च । 'वज्रपुष्पं तिलस्य यत्' इत्यमरः । इति पञ्चेषून्पञ्चबाणान् । व्यस्तरूपकम् । भ्रूरेव धनुः तच्च । निक्षिप्तस्य गणनावश्यकत्वादेतदुक्तम् । निहितवान्निक्षिप्तवान् । चारुकार्यचिकीर्षया दूरदेशं जिगमिषन्तः स्वमित्रे निजसर्वस्वं निक्षिपन्तीति प्रसिद्धम् । इह अस्मिञ्श्रीमुकुन्दाननेन्दौ श्रीनारायणमुखचन्द्रे मतिमर्पयतु यथा कामस्तथा संसारजिगीषा-प्रवृत्तो भक्तस्तत्र मतिं निक्षिपतु इति ध्वनितम् । अत्र रूपकालङ्कारः ॥ ६३ ॥

**स्वः सोमो देवतास्मै हविरपि हृदयं पुंस्प्रवृत्तिं सृजन्ती**
**सा यातायातसंज्ञाच्छलभृदभिधया श्वासमूर्त्तिः श्रुतिश्च ।**

**तत्साकाङ्क्षालिमाला स्वनितनुतिपरा संनिधिस्थार्थवादः**
**कुर्वीतादोमुखस्य स्मरणमखमतो मुक्तिकामोधिकारी ॥ ६४ ॥**

**स्वः सोम इति** । अतः स्मरणमखोपयुक्तसामग्रीलाभात् अधिकारी मुक्तिकामः अदोमुखस्य स्मरणमखं कुर्वीत इत्यन्वयः । अधिकर्त्तुं शीलमस्य अधिकारी । ताच्छील्ये णिनिः । 'शान्तो दान्तस्तितिक्षुः' इत्यादिश्रुत्या शमदमादिसंपन्नस्यैव तादृशस्मरणाधिकारात् । यथा कात्यायनेनोक्तमधिकारसूत्रे—'ब्राह्मणादीनामेवाग्निष्टोमादिकर्मण्यधिकारः न तु तदितरेषामश्रोत्रियादीनाम्' एवं ज्ञानकाण्डे—'मुमुक्षोरेव तादृशस्मरणेधिकारः नान्येषां कर्मपराणाम् ।' 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इति श्रुतेः । मुक्तिं कामयते इति मुक्तिकामः । कर्मण्यण् । अदोमुखस्य उपक्रान्तत्वादमुष्य श्रीनारायणस्य मुखं तस्य । अदोमुखस्येत्येकं पदमथवा पदद्वयम् । अदः नास्ति दाः यस्य तस्य । दोवखण्डने इति धातोः क्विप् । अखण्डितस्य परिपूर्णस्य व्यापकस्य एतादृशत्वं प्रथमश्लोकव्याख्यायामेवोक्तम् । स्मरणमेव मखस्तम् । अत्र स्मरणं ध्यानमेव न तु स्मृतिः मुक्तिकामाधिकारित्वात् । पूर्वदृष्टस्य तत्सदृशदर्शनेन स्मरणं जायते अदोमुखं तथा न भवतीति । 'आत्मा वा अरे द्रष्टव्यः' इति श्रुतेः । श्रीभागवते च 'श्रोतव्यः कीर्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयम् ।' इति । तस्माददोमुखस्य स्मरणमखं कुर्वीत । स्मरणक्रियाफलस्य मोक्षस्य यागफलस्य स्वर्गादेरिव । कर्त्रभिप्रायात् 'स्वरितञित—' इत्यात्मनेपदम् यजेतेतिवत् । स्मरणस्य मखत्वेन रूपणान्मखस्वरूपं निरूपयति स्वः सोम इत्यादिना । यज्ञस्य द्रव्यदेवतात्यागरूपत्वाद्देवतामाह—स्वः आत्मा स्वयं सोमो देवता सोमनाम्नी देवता श्रीमुखस्य पूर्णसोमसमानत्वात् । 'स्वं स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये धनेऽस्त्रियाम् ।' इति मेदिनी । अस्मै सोमाय एनमुद्दिश्येत्यर्थः । हविः तत्तद्देवतोद्देशेन वह्न्याद्यधिकरणकप्रक्षेपद्रव्यरूपम् । एतेन याग उक्तः । हविः द्रव्यं हृदयं हृदयस्य द्रव्यत्वेन रूपणं करणत्वसाधर्म्येण 'मनसैवानुद्रष्टव्यम्' इत्यादिश्रुत्या मनसो ध्यानकरणत्वेन प्रतिपादनात् यथा 'दध्ना जुहोति' इत्यादि । एवं यागस्वरूपमुक्तं यागस्य च विधिवाक्यप्रतिपाद्यत्वेन तदपेक्षायामाह—यातायातसंज्ञाच्छलभृदभिधया पुंस्प्रवृत्तिं सृजन्ती श्वाससंज्ञा श्रुतिः सा च यातायाताभ्यां नासाधिकरणकनिजगमनागमनाभ्यां सर्वेषां जीवानां संज्ञा चेतना 'संज्ञानामानि गायत्र्यां चेतनारवियोषितोः' इति मेदिनी । तस्याः छलं कपटं बिभर्तीति संज्ञाच्छलभृत् या अभिधा शाब्दी भावना तया पुंस्प्रवृत्तिं सृजन्ती

'पुमः खय्यम्परे' इति विसर्गस्य षत्वनिषेधार्थः 'सम्पुंकानाम्—' इति सः । इष्टभावनादिरूपा अभिधा पुरुषप्रवृत्तिं भोग्येषु स्वर्गादिषु फलेषु पुरुषाणां प्रवृत्तिमासक्तिं सृजति एवं विश्वासरूपा श्रुतिः स्वयातायाताभ्यां पुरुषचेतनां प्रतिपाद्य प्रवृत्तिं व्यापारं सृजति । महदादिसर्गस्याचेतनत्वात् 'अनेनात्मना जीवेनानुप्रविश्य नामरूपे व्याकरवाणि' इति अनुप्रविश्य चेतनाप्रतिपादनं सकलपुरुषश्वासस्य भगवच्छ्वासाधीनप्रसरणत्वात्तद्व्यापारसृष्टिः । तथाचोक्तं श्रुत्यादिषु 'यं वै श्वसन्तमनु विश्वे श्वसन्ति' इति । ब्रह्मसंहितायां च 'यस्यैव निःश्वसितकालमथावलम्ब्य जीवन्ति रोमविलजा जगदण्डमाया ।' इति च । श्वाससंज्ञा श्वासनाम्नी तद्रूपा 'तस्यैतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोथर्वाङ्गिरसः—' इत्यादिश्रुतेः । 'यस्य निःश्वसितं वेदाः' इति श्रुतेश्च । श्रुतिः सा विधिश्रुतिः विधिवाक्य आम्नायस्य क्रियार्थत्वात् । विधिवाक्यस्यार्थवादसहकृतत्वात्तदपेक्षायामाह—तत्साकाङ्क्षेति । तत्साकाङ्क्षा स्वनितनुतिपरा संनिधिस्था अलिमाला अर्थवादः अर्थवाक्यस्य विधिवाक्येन सह पुरुषार्थपर्यवसितविध्यपेक्षितप्राशस्त्यसमर्पकतासम्बन्धप्रतिपादितैकवाक्यतापत्तेः । तदाकाङ्क्षायामाह—तत्साकाङ्क्षेति । तस्यां श्वाससंज्ञश्रुतौ साकाङ्क्षा सौरभातिशयेन साभिलाषा स्वनितमेव श्रुतिः सैव परं यस्याः सा 'परं श्रेष्ठारिपुर्यर्थे' इति मेदिनी । संनिधिस्था निकटवर्तिनी अलिमाला भ्रमरपङ्क्तिः सैवार्थवादः अर्थवादधर्मवत्त्वात् । ते यथा तस्यां श्रुतौ प्राशस्त्यसमर्पकताद्वारा साकाङ्क्षा । आम्नायस्य विधिवाक्यस्य क्रियार्थत्वेन तदितरस्यानर्थक्यप्राप्तौ तत्प्राशस्त्यसमर्पकत्वात् । स्वनितं वेदोच्चारितं यद्विधिवाक्यं तन्नुतिपरत्वं स्तावकत्वात् । संनिधिस्थत्वं विधिद्वारा प्रामाण्यात्तदनन्तरभावित्वम् । यथा वायव्ये—'श्वेतमालभेत भूतिकामः' 'वायुर्वै क्षेपिष्ठा देवता' इत्यादि । तथा चाभियुक्तैरुक्तम्—'लिङ्ङभिधा सैव च शाब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः । संबन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते ॥' इति । अतो मुक्तिकामः नारायणमुखस्मरणमखं कुर्वीतेति । अखण्डमण्डलसुधाकरमनोहरस्वरूपं सकलचेतनासंपादकप्रसरणसर्वाम्नायमयनिःश्वाससौरभाकृष्टषड्ङ्घ्रिरणपटलझङ्कारस्तवनीयगुणगणं श्रीमन्नारायणवदनं मनसा भावयञ्जनः संसारान्मुच्यत इति तात्पर्यार्थः । अत्र रूपकालङ्कारः स च मुखहृदयादीनां सोमदेवताद्रव्यादिरूपणेन तथा पुंस्प्रवृत्तिः सैवेति परम्परितेन संज्ञाभृदभिधयेति व्याजापह्नुत्या तत्साकाङ्क्षादिविशेषणैः अलिमालाया अर्थवादरूपेण च सावयवः सजातीयविजातीयसंकीर्णश्च ॥ ६४ ॥

**अग्नेरग्र्यारणिं स्वाभरणमणिमहोदामसौदामिनीनां**
**राज्या नीराज्यमानं नयनपदकृतार्थीकृतार्कामृतांशु ।**
**आदित्यैर्दुस्तुदस्यान्तरचरतमसो ध्वंसकार्याय चित्ते**
**कुर्याद्देदीप्यमानद्युति मुखमखिलज्योतिषां भासकस्य ॥ ६५ ॥**

**अग्नेरिति** । अग्नेः अग्रभवामरणिं प्रथमनिर्मथ्यदारुरूपामग्नेर्नारायणमुखात्प्रथमोत्पन्नत्वात् । स्वाभरणानां किरीटकुण्डलादीनां महोदामान्येव सौदामिन्यः तासां राज्या श्रेण्या नीराज्यमानं निर्मथ्यमानं नयनपदेन तत्स्थानाधिष्ठानेन कृतार्थीकृतावर्कामृतांशू येन तत् स्वतो देदीप्यमानद्युति अखिलज्योतिषां भासकस्य स्वपरप्रकाशज्योतिषां ज्योतिष्कारणस्य श्रीनारायणस्य मुखम् 'यस्य भासा सर्वमिदं विभाति' इति श्रुतेः 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' इति गीतोक्तेश्च । अत एव आदित्यैः द्वादशभिः सूर्यैः दुस्तुदस्य दुष्परिहरस्य अन्तरचरतमसः अविद्यामयहृदयग्रन्थिरूपस्य ध्वंसकार्याय प्रध्वंसाय चित्ते कुर्यात् । ध्यायेदित्यर्थः । एतेन सूर्यादिदुष्करकर्मकर्तृत्वं नारायणस्य ध्वनितम् । अत्र परिकरालङ्कारः ॥ ६५ ॥

**स्वस्वान्तादेव देवो यमजनयदयं वेधसोकल्पशिल्पं**
**भक्तानुक्रोशगर्भान्मुनिजनमनसां लीनता यत्र युक्ता ।**
**व्यक्तं यस्यानुबिम्बा हिमकरनिकराः पूर्णिमापूर्णबिम्बा-**
**स्तं सेवेतामृतीयन्नमृतकरमृतं चेतसा तन्मुखाख्यम् ॥ ६६ ॥**

**स्वस्वान्तादिति** । अयं देवः श्रीनारायणः भक्तानुक्रोशगर्भाद्भक्तानुग्रहपूर्णात्स्वस्वान्तान्निजमनसः एव वेधसः अकल्पशिल्पं स्वतःसिद्धत्वाद्विधिसृष्टिबहिर्भूतं यं मुखचन्द्रमजनयत् । चन्द्रस्य भगवन्मनोजन्यत्वं श्रुतिसिद्धं भगवद्विग्रहस्य स्वेच्छामयत्वं श्रीभागवते यथा 'भक्तेच्छोपात्तदेहात्' । 'अस्यापि देववपुषो मदनुग्रहस्य स्वेच्छामयस्य' इति च । यत्र मुनिजनमनसां लीनता युक्ता उक्ता । 'मनश्चन्द्रं प्रविशति' इति मनोलयस्य श्रुतिसिद्धत्वम् । पूर्णिमायां पूर्णबिम्बाः अखण्डमण्डलाः हिमकरनिकराः न त्वन्ये खण्डितत्वात् । यस्य अनुबिम्बाः प्रतिबिम्बाः व्यक्तं स्फुटम् । अतः अमृतीयन्नात्मानममृतमिच्छञ्जनः तन्मुखाख्यमृतं

सत्यं तस्य सच्चिदानन्दरूपत्वात् । अमृतकरं चन्द्रं मोक्षकारकं च । अमृतकरादमृतप्राप्तिसिद्धेः । चेतसा सेवेत मोक्षार्थम् । अत्र रूपकालंकारः स श्लेषपरिकरसंकीर्णः ॥ ६६ ॥

अत्र त्रिभिः श्लोकैः त्रिलोकमाधुर्यसारास्पदं नारायणाधरबिम्बं वर्णयति—

**दुग्धस्निग्धस्मिताभामिषविशदकृपोन्मेषपीयूषवर्षैः**
**स्वेषां हर्षं दधाने धृतमधुरपरिस्पन्दने दीनबन्धोः ।**
**मन्दश्वासानिलेषत्तरलकिशलयं श्रीगरिष्ठेधरोष्ठे**
**चिन्तां दन्तांशुदम्भस्फुटकुसुमरजःसुप्रतिष्ठेनुतिष्ठेत् ॥ ६७ ॥**

**दुग्धस्निग्धेति** । दुग्धवत्स्निग्धा या स्मिताभा मन्दहासशोभा तन्मिषेण तत्कपटेन विशदाः शुद्धाः निरुपाधित्वाद्भक्तकृपायाः । अत एव दीनबन्धोः इति वक्ष्यति । ये कृपोन्मेषाः करुणाप्रकाशाः त एव पीयूषवर्षाणि तैः स्वेषां स्वीयानां भक्तानां हर्षं दधाने पुष्णाति धृतं मधुरं मनोहरं परिस्पन्दनमीषच्चलनं येन तस्मिन् । परिस्पन्दनस्याधरधर्मत्वात् । अत एव मन्दः यः श्वासानिलः तेन ईषत्तरलं यत्किशलयं पल्लवं तस्य श्रीरिव या श्रीः तया गरिष्ठे अतिशयेन पूज्ये । गुरुशब्दादतिशयार्थे इष्ठन्प्रत्ययः । दन्तांशूनां दन्तकिरणानां दम्भेन स्फुटकुसुमरजसां विकचपुष्पपरागाणां सुप्रतिष्ठा शोभनस्थितिः यस्मिंस्तत्र । एतेन श्वासस्य मलयानिलत्वमधरस्य पल्लवत्वं दन्तानां पुष्पत्वं तदंशूनां परागत्वं ध्वनितम् । दीनबन्धोः श्रीनारायणस्य अधरोष्ठे चिन्तामनुतिष्ठेत् स्मरणं विदध्यात् ध्यायेदित्यर्थः । अत्र व्याजापह्नुतिरूपकपरिकराणां संकरः ॥ ६७ ॥

**आस्येन्दुस्यन्दमानामृतविततशिराद्वारचातुर्यचौर्या-**
**चार्या स्मार्या चिरायारुणरुचिरुचिरा श्रीधरस्याधरश्रीः ।**
**योगादास्वाद्यमानामृतरसजननी या त्रिलोकीजनन्योः**
**कामं कामं दुहानाप्यहह दहति तं भाव्यतां देहबन्धात् ॥ ६८ ॥**

**आस्येन्द्विति** । आस्यमेव इन्दुः तस्मात्स्पन्दमानं क्षरत् यत् अमृतं चन्द्रस्यामृतरसरूपत्वात् । तस्य या वितताः शिराः रसश्रवणमार्गरूपाः जलनाडिकाः तासां यद्द्वारचातुर्यं द्वारवच्चातुर्यं निःसरणसौकर्यं यथा ह्रदादौ एकत्र प्रदेशे जलस्रवणं भवति न सर्वत्र तथा

मुखचन्द्रस्य अमृतस्रवणमधरदेश एवेति भावः। तच्चौर्ये आचार्या अध्यापिका तादृशसौन्दर्यास्पदमित्यर्थः। अरुणरुचिरुचिरा श्रीधरस्याधरश्रीः श्रीनारायणस्याधरकान्तिः चिराय स्मार्या ध्येया। 'ऋहलोर्ण्यत्' इति ण्यत्। वृद्धिः। त्रिलोकीजनन्योः त्रिजगन्मात्रोः लक्ष्मीविश्वधात्र्योः कामं यथेष्टं 'कामं प्रकामं पर्याप्तं निकामेष्टम्' इत्यमरः। कामं मन्मथमनोरथं दुहानापि पूरयन्त्यपि। 'दुह प्रपूरणे' इति धातोः शानच्। अमृतरसजननी पीयूषास्वादसंपादिका मोक्षानन्दसंपादिका च। या च योगात् चित्तवृत्तिनिरोधात् आस्वाद्यमाना समाधिनानुभूयमाना देहबन्धात् तं कामं देहबन्धहेतुकमभिलाषं दहति भस्मीकरोति अहह आश्चर्यम्। भाव्यतां चिन्त्यताम्। एतदाश्चर्यं कामदाहकत्वेनाश्चर्यत्वात्। अत्र रूपकविरोधयोः संकरः॥ ६८॥

**माधुर्य्योद्रेकहृद्यं विपरिणतफलं रूपसंपल्लतायाः**
**श्रीप्रेष्ठस्यौष्ठबिम्बं स्मरतु रुचिमदाहूतबालार्कबिम्बम्।**
**यन्मृष्टत्वस्य तुष्टा निजरमणभुजापञ्जरान्तःस्फुरन्ती**
**सोत्सेकं छेकभावं कलयति कमलाकारिका कीरकन्या॥ ६९॥**

**माधुर्येति।** माधुर्योद्रेकेण स्वादुत्वातिशये हृद्यं हृदयंगमं रूपसंपदेव लता बिम्बवल्ली तस्या विपरिणतफलं परिपक्वं बिम्बाख्यं फलं रुचिमदेन शोभातिशयाभिमानेन आहूतं बालार्कबिम्बं येन तत्। ओष्ठबिम्बबालार्कबिम्बयोः बिम्बनामसाम्येन स्पर्धौचित्यं 'विवादश्च विवाहश्च समयोरेव शोभते' इति न्यायात्। श्रीप्रेष्ठस्य श्रीनारायणस्य ओष्ठबिम्बं स्मरतु भक्त इति शेषः। यन्मृष्टत्वस्य यन्माधुर्यस्य तुष्टा। अत्र संम्बन्धमात्रविवक्षया षष्ठी। 'पूरणगुणसुहितार्थ—' इति सुहितार्थकतुषधातुयोगेन समासाभावः। निजरमणस्य भुजापञ्जरान्तः भुजापञ्जरमध्ये स्फुरन्ती प्रकाशमाना नतु इतरशुकीव बद्धा कमलाकारैव कमलाकारिका। स्वार्थे कप्रत्ययः। कीरकन्या शुकी सोत्सेकं सातिशयं छेकभावं गृहासक्तपक्षित्वं 'गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते।' इत्यमरः। कलयति गृह्णाति। प्रियभुजापञ्जरे वर्त्तते इति भावः। अत्र रूपकालङ्कारः॥ ६९॥

अथ त्रिभिः श्लोकैस्त्रिगुणतमोध्वंसनज्योत्स्नाशालिनां दन्तानां वर्णनमारभते—

**राजानं या द्विजानामजमुखजतया विश्रुता तं स्वतातं**
**भक्त्योपास्ते च किञ्च स्फुरदरुणरुचिं साधु संध्यायमानम् ।**
**साधिष्ठां वर्णनिष्ठां वहति तदधरं या पुरस्कृत्य नित्यं**
**पूज्या राजी द्विजानां प्रणिहितमनसा स्याद्द्विजेन्द्रध्वजस्य ॥ ७० ॥**

**राजानमिति** । द्विजेन्द्रः गरुडः स एव ध्वजो यस्य अथवा द्विजेन्द्रेषु ब्राह्मणश्रेष्ठेषु ध्वजवत्प्रधानस्य ब्राह्मणोत्तमोत्तमस्य । 'ब्रह्मजो ब्राह्मणप्रियः' इति विष्णुसहस्रनामोक्तेः । श्रीनारायणस्य द्विजानां दन्तानां ब्राह्मणानां च राजी श्रेणी । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । द्विजश्रेष्ठस्य द्विजानुगतिप्रसिद्धेः । प्रणिहितं समाहितं यन्मनः तेन समाधिनेत्यर्थः । प्रणिहितं मनो यस्य तेनेति वा । भक्तेनेति शेषः । पूज्या पूजनीया स्यात् । या अज-मुखजतया भगवन्मुखजत्वेन विश्रुता ख्याता । उभयोस्तत्त्वप्रसिद्धेः । स्वतातं स्वजनकं द्विजानां राजानं चन्द्रं तत्सदृशं ब्राह्मणश्रेष्ठं च पितृश्रैष्ठ्येन पुत्राणां श्रैष्ठ्यात् । भक्तिः पूज्येष्वनुरागः तया उपास्ते सेवते इति पितृसेवायाः परमधर्मत्वात् । अन्यत्र भक्त्या विभक्त्या विभागेन पङ्क्तिद्वयावस्थित्या उपास्ते उपस्तुत्यास्ते । किं च पुनः स्फुरदरुणरुचिं स्फुरन्ती अरुणा रुक् यस्य तम् । अन्यत्र स्फुरन्ती अरुणस्य सूर्यसूतस्य रुचिः यत्र तम् । प्रातःसंध्यायाः सूर्योदयात्पूर्वमनुष्ठेयत्वात्साधुभिः सम्यग्ध्यायमानम् । अन्यत्र साधु शोभनं यथा तथा संध्यायमानं संध्यावदाचरन्तं तदधरं नारायणोष्ठं नित्यं पुरस्कृत्य प्रथममनुष्ठाय अग्रे कृत्वा साधिष्ठामतिशयेन साध्वीं वर्णनिष्ठां शोणिमप्रसरणेन निजपाटलिमकान्तिनिष्पत्तिम् । अन्यत्र वर्णनिष्ठां ब्राह्मणजातिनिष्पत्तिं च अन्यत्र साधिष्ठां वर्णनिष्ठां 'निष्ठानिष्पत्तिनाशान्त-यागनिर्वहणेषु च' इति मेदिनी । वहति । नित्यसन्ध्योपासनस्य ब्रह्मण्याधायकत्वात् । अत्र द्विजानां राजी द्विजानां राजीवेति श्लेषोत्थापितोपमालङ्कारः ॥ ७० ॥

**स्वच्छन्दं बन्धुरत्वं दधदधरदलद्बन्धुजीवानुबन्धा-**
**न्मौकुन्दं दन्तवृन्दं मुदितमुनिहृदिन्दिन्दिरं दाम कौन्दम् ।**
**वारं वारं विभाव्यं विभुवररसनाध्यासनौजायितायाः**
**पूजायै जायते यत्किल कलुषमुषः शारदादेवतायाः ॥ ७१ ॥**

**स्वच्छन्दमिति** । मौकुन्दं मुकुन्दसंबन्धि नारायणीयं दन्तवृन्दम् । अधरमेव दलद्बन्धुजीवं पुष्प्यद्बन्धूकं तस्यानुबन्धात् । संबन्धाच्छोणिमप्रसरणेन संसर्गादित्यर्थः । स्वच्छन्दं स्वतन्त्रं बन्धुरत्वं शोभनत्वं दधत् । 'बन्धुरः शोभने नम्रे' इति मेदिनी । अत एव मुदितमुनिह्रदिन्दिन्दिरं मुनिमनोमधुकरानन्दकं कौन्दं कुन्दकुसुमानां संबन्धि दाम माल्यं वारं वारं पुनः पुनः विभाव्यम् । इदं नारायणदन्तवृन्दमधरबन्धूकमधुरं कुन्दकुसुममाल्यमिति विभावयेत् । यत्कौन्दं दाम विभुवरः श्रीनारायणः तस्य रसनायां यदध्यासनमधिष्ठानमुपवेशनमित्यर्थः । तेन ओजायिताया: ओजस्विनीवदाचरिताया: । 'ओजःसहोम्भः-सरसो नित्यम्' इति नित्यं सकारलोपः । कलुषमुषः अज्ञानाभिन्नकलुषनाशिकायाः श्रीसरस्वत्याः वाग्देवतायाः पूजायै जायते किलेति प्रसिद्धम् । सरस्वतीपूजायां कुन्दकुसुमानां प्राशस्त्यात् 'पञ्चम्यां कुन्दकुसुमैः कौन्दी पूज्या प्रयत्नतः ।' कौन्दी सरस्वतीति व्याख्यातम् । तत्र दन्तानां सरस्वतीस्पष्टोच्चारणकारणत्वेन तत्पूजाकारणत्वमिति भावः । अत्र रूपकालङ्कारः ॥ ७१ ॥

**पङ्क्ति-द्वैधानुबन्धिश्रुतियुवतिशिरश्चारुसीमन्तसीमा-**
**प्रव्यक्तामुक्तमुक्तागुणगुणनिपुणाश्चित्तमारोपणीयाः ।**
**वेदान्तार्थस्य दन्ता धवलिमबलिनः सान्द्रसिन्दूरधारा-**
**सौन्दर्यं धारयन्त्यारभत यदभितः सौष्ठवं सौष्ठलेखा ॥ ७२ ॥**

**पङ्क्ति-द्वैधेति** । पङ्क्त्याः द्वैधेन द्विविधत्वेन । 'संख्याया विधार्थे धा' इति धाप्रत्ययः । 'द्वित्र्योश्च धमुञ्' । 'धमुञन्तात्स्वार्थे' इति मलोपः । तदनुबन्धी द्विधा भिन्न इत्यर्थः । श्रुतिर्युवतिरिव तस्याः शिरसि या चारुसीमन्तसीमा तस्यां प्रव्यक्तं स्पष्टमामुक्तो निहितो मुक्तागुणो मुक्तामाला तस्याः गुणैः उज्ज्वलत्वस्निग्धत्वादिगुणैः निपुणाः कुशलाः श्रुतियुवतिसीमन्तमौक्तिकमालाद्वयशोभानुकारिणः वेदान्तानां सर्वोपनिषदामर्थस्य तदभिधेयस्य तत्प्रतिपाद्यस्येत्यर्थः । श्रीनारायणस्य धवलिम्ना बलिनः अतिधवलाः दन्ताः चित्तमारोपणीयाः चित्ते निधेया ध्येया इत्यर्थः । सान्द्रसिन्दूरधारासौन्दर्यं सान्द्रसिन्दूररेखाशोभनत्वं धारयन्ती तद्वदरुणा सा ओष्ठलेखा यानभीति यदभितः सौष्ठवं सुष्ठुत्वं श्रुतिवधूसीमन्तामुक्तमुक्तामाला बहिर्भागेषु सिन्दूररेखासौभाग्यमारभत तच्छोभां दधारेत्यर्थः । अत्र रूपकालङ्कारः ॥ ७२ ॥

अथ त्रिभिः श्लोकैस्त्रिवेदीमयश्वसितां नासिकां वर्णयति—

**ध्यायेद्घोणां घृणाब्धेस्तिलकुसुमतुलासज्जयाप्यर्जयन्ती-**
**माकृत्यामोदमुच्चैः सकलसुमनसामुत्तमामोदकामः ।**
**यातायातैर्यदीयश्वसितसततगा द्वारि धारालरोला-**
**न्रोलम्बाह्वार्थिसार्थाननिशमुपगतांस्तादृशांस्तोषयन्ति ॥ ७३ ॥**

**ध्यायेदिति** । घृणाब्धेर्दयासिन्धोः । 'कारुण्यं करुणा घृणा' इत्यमरः । श्रीनारायणस्य तिलकुसुमतुलायां तिलपुष्पसाम्ये सज्जया उद्युक्तया आकृत्या स्वरूपेण सकलसुमनसां सर्वकुसुमानां वेदानां धारणां च उच्चैर्महान्तमामोदं सौरभ्यं परमानन्दं च अर्जयन्तीं जनयन्तीं तिलकुसुमसाम्येन तत्सौरभ्यधारणौचित्येपि सकलपुष्पसौरभार्जनादिति चित्रचरितां घोणां नासामुत्तमामोदकामः परमानन्दकामः परमसौरभकामश्च ध्यायेत् । 'आमोदो हर्षकामयोः' इति विश्वः । सकलपुष्पसौरभार्जनफलमुपपादयति—यदीयाः यस्या नासिकायाः सम्बन्धिनः श्वसितसततगाः श्वासानिलाः द्वारि नासाविवरसमीपे धारालाश्च ते रोलाश्चेति तान् । सौरभाशया बद्धपङ्क्त्यः । लोलाः रलयोरैक्यम् । 'रोलो लोलश्चञ्चल—' इति द्विरूपकोषः । रोलम्बाह्वा भ्रमरनामानो येर्थिनो याचकास्तेषां सार्थाननिशं सततमुपगतानुपासन्नांस्तादृशान्सकलपुष्परसास्वादमात्ररसिकान्यातायातैर्गतागतैस्तोषयन्ति । एतेन सकलकुसुमसौरभ्यादपि भगवन्नासानिलसौरभ्यमुत्कृष्टं नासानिलस्यार्थिपूजा च ध्वन्यते । एतेन भगवतः कृपालुता च ॥ ७३ ॥

**सर्वेशघ्राणवंशं समभिनिविशतां ब्रह्मधामारुरुक्षो—**
**रुच्चैर्निःश्रेणिमग्र्यां यमपि च सुषमा नाम शैलूषयोषा ।**
**अध्यारूढा गुणैरुच्छ्रितमतिविततैर्बिभ्रती विभ्रमर्द्धि**
**लोकस्यालोकगृध्नोरपहरति चिरोपार्जितापूर्वलक्ष्मीम् ॥ ७४ ॥**

**सर्वेशेति** । सर्वेशस्य श्रीनारायणस्य घ्राणमेव वंशस्तं समभिनिविशतां ध्यानेन प्राप्नोतु । मुमुक्षुरिति शेषः । 'अभिनिविशश्च' इति आधारस्य कर्मत्वम् । घ्राणवंशसाधर्म्यमुपपादयति—ब्रह्मधाम ब्रह्मस्वरूपं गृहं च । 'धाम देहे गृहे रश्मौ' इत्यमरः । आरुरुक्षोरारोढुमिच्छोर्भक्तस्याग्र्यां श्रेष्ठां दृढत्वात् । उच्चैरुन्नताम् । एतेनारोहणक्षमत्वं सूचितम् ।

निःश्रेणिम् । 'निःश्रेणिस्त्वधिरोहणी' इत्यमरः। एतेन नासिकाध्याने भगवत्प्राप्तिरुक्ता। अतिविततैः ख्यातैर्वंशोच्छ्रयणाय सर्वतो विस्तृतैश्च गुणैः सौरभ्यसौकुमार्यसौरूप्यादिभिः रज्जुभिश्च उच्छ्रितमुत्कृष्टमुन्नतिकृतं च यमपि घ्राणवंशमध्यारूढा आश्रिता अग्रस्थिता च सुषमा परमा शोभा तन्नाम्नी शैलूषयोषा नटी। 'शैलालिनश्च शैलूषा जायाजीवाः कुशीलवाः' इत्यमरः। विभ्रमर्द्धिं विलाससमृद्धिं प्रतिक्षणमुपचीयमानां मनोहरतां नटीभिर्विरचितामद्भुतां वंशोपरि विविधां भ्रमसमृद्धिं च बिभ्रती सती आलोकगृध्नोर्ध्यानेन दर्शनकाङ्क्षिणः भक्तस्य अन्यत्र तादृशचित्रनर्त्तनदर्शनकाङ्क्षिणः सर्वस्य लोकस्य चिरोपार्जितां बहुजन्मसंचितामपूर्वां लक्ष्मीमलक्ष्मीम्। 'स्यादलक्ष्मीस्तु निर्ऋतिः' इत्यमरः। नासालक्ष्मीदर्शनादलक्ष्मीनिवृत्तिः सुकरैव। अन्यत्र अतिचित्रनृत्यदर्शनहर्षेण दत्तां चिरोपार्जितां बहुकालं गृहे संचितामपूर्वां दुर्लभां लक्ष्मीं वस्त्राभरणसुवर्णमणिमुक्तादिरूपां संपदमपहरति लुण्ठतीत्यर्थः ॥ ७४ ॥

**नस्यैरुद्यत्कषायैः कषितुमिव जगत्प्राणरूपैरुपायैः**
**पुंसां दोषत्रिकोद्यद्भवगदविपदं योगतोन्तर्विशन्तीम्।**
**नासां नासत्यरूपाममृतकरतया विश्रुतामाश्रयेत्तां**
**श्रीसंज्ञा सैन्धवी बह्वमनुत चकिताधिश्रियं यत्प्रसूताम् ॥ ७५ ॥**

**नस्यैरिति**। तां प्रकरणाद्भगवदीयां नासामाश्रयेत्। कथम्भूताम्? नासत्यरूपां सत्यरूपाम्। अभावाभावस्य भावरूपत्वात्। 'सत्यं विज्ञानमानन्दं ब्रह्म' इति भगवद्रूपस्य सत्यत्वप्रतिपादनात्। अत एव अमृतकरतया मोक्षकरत्वेन विश्रुतां ख्याताम्। पुनः कीदृशीम्? उद्यत्कषायैरुदितसौरभैः। 'कषायः सौरभेपि च' इति कोषात्। उपायैः उप समीपे अयन्ते गच्छन्तीति उपायाः तैः श्वासपवनस्य नासासमीपगतागतविधायित्वाज्जगत्प्राणरूपैः पवनरूपैः नस्यैर्नासिकाभवैः। 'शरीरावयवाद्यत्' इति यत्प्रत्ययः। निःश्वासैरुपलक्षिताम्। इत्थंभूतलक्षणे तृतीया। योगतो ध्यानात्। 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः। पुंसां ध्यातॄणां दोषत्रिकेण क्रोधलोभमोहात्मकेन दोषत्रयेण उद्यन्नुद्गच्छन्। उत्पूर्वस्य यमधातोः क्विप्। मलोपतुगागमौ च। यो भवगदः अनादिजन्ममरणप्रवाहरूपसंसारः एव गदः तस्य विपदं विविधं पदं स्थानं नानाशरीरात्मकं कषितुमिव

नाशयितुमिव अन्तः स्वान्तः विशन्तीम् । 'कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् । एतैर्विमुक्तः कौन्तेय त्रिभिः' इति गीतोक्तेः । कषितुमिवेति हेतूत्प्रेक्षा । श्रीसंज्ञा श्रीनाम्नी सैन्धवी सिन्धुपुत्री लक्ष्मीः यत्प्रसूतां यस्यां नासिकायामुत्पन्नामधिकां निरुपमां श्रियमन्यत्र तादृशशोभालोकनाभावात् । चकिता विस्मिता सती बह्वमन्यत बहु मतवती । नासत्यरूपामित्यर्थान्तरम् । अश्विनीकुमाररूपाम् । 'नासत्यावश्विनौ दस्रौ' इत्यमरः । भगवन्नासायाः नासत्यरूपत्वं 'नासत्यदस्रौ परमस्य नासा' इति भागवतोक्तेः । नासत्ययोः स्ववैद्यत्वात्तयोर्वैद्यधर्मानुपपादयति । अमृतकरतया अमृतहस्तत्वेन च ख्याताम् । 'गुरोरधीताखिलवैद्यविद्यः पीयूषपाणिः कुशलः क्रियासु । गतस्पृहो धैर्यधरः कृपालुः शुद्धोधिकारी भिषगीदृशः स्यात्' इति वैद्यके । पुनः कीदृशः ? नस्यैः नासाग्राह्यैः औषधैः उद्यद्भिः संपादितैः कषायैः स्वरसादिपञ्चविधैः जगत्प्राणरूपैः जगत्प्राणभिन्नैरन्यै रसचूर्णादिभिरुपायैः पुंसां दोषत्रिकेण वातपित्तकफरूपेण उद्यन्प्राणमध्ये उद्गच्छन्यः भवगदः भवजन्मा गदः । मध्यपदलोपः । ज्वरः स एव विपत्तां कषितुं नाशयितुं योगान्मणिबन्धस्थनाडीज्ञानोपायादन्तर्विशन्तीमिव अन्तः प्रविश्य पर्यालोचयन्तीमिव स्थिताम् । तथा च वैद्यके—'नस्यं तत्कथ्यते धीरैर्नासाग्राह्यं महौषधम् । नावनं नस्यकर्मेति तस्य नामद्वयं स्मृतम् ॥' अस्य फलम्—'लाघवं मनसः शुद्धिः स्रोतसां व्याधिसंक्षयः । चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम् ॥ अथातः स्वरसः कल्पा........। ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम् ॥ अभयामुस्तधान्याकरक्तचन्दनपद्मकैः । वासकेन्द्रयवोशीरगुडूचीकृतमालकैः ॥ कैरातकुटजामुस्तधान्येन्द्रयवनागरैः । दशमूलीमहादारुगजपिप्पलिकायुतैः ॥ कृतः कषायः पार्श्वार्तिसंनिपातज्वरं जयेत् ।' इति । 'दक्षापमानसंक्रुद्धरुद्रनिश्वाससंभवः । ज्वरस्त्रिपादस्त्रिशिराः षण्मुखो नवलोचनः ॥' ज्वर इत्युपलक्षणम् । ज्वरस्य रोगप्राधान्यात् । यथा—'देहेन्द्रियमनस्तापी रोगाणामग्रजो बली । ज्वरः प्रधानो रोगाणामुक्तो भगवता पुरा ॥' इति । अन्यान्गदानित्यर्थः । 'मणिबन्धस्थिता नाडी वातपित्तकफात्मिका ॥ तज्ज्ञानादान्तरं सर्वं वैद्यो जानाति रोगिणः ॥' इति । तथा श्रीहर्षः—'किमु तदन्तरुभौ भिषजौ दिवः स्मरनलौ विशतः स्म विगाहितुम् ।' इति अन्तर्ज्ञानं विना वैद्यस्य चिकित्सानर्हत्वात् । एवम्—वैद्यधर्मानुकृतये शोभातिशयमुपपादयति—पूर्वं श्रीयुक्ता संज्ञा सूर्यप्रिया पश्चात्सैन्धवी वडवारूपेण तपश्चरन्ती श्रियमधि

ययोः श्रियमधिकृत्य श्रीविषये चकिता सती। अहो वडवारूपाया मत्तः ईदृशौ परमसुन्दरौ कुमारौ उत्पन्नाविति साश्चर्यं यत्प्रसूताम्। 'जनयित्री प्रसूर्माता' इत्यमरः। बहुमन्यत। अहं धन्येति बहु मतवती। अत्र सत्यरूपां तामिवेति श्लेषेणोपमालङ्कारध्वनिः॥ ७५॥

अथ चतुर्भिः श्लोकैः चतुर्मुखादिसापेक्षकटाक्षपातमीक्षणद्वयं वर्णयति—

**अभ्यर्णे कर्णयोः किं स्खलितमलिभरान्नुत्तमुत्तंसपद्म-**
**द्वन्द्वं भ्राम्यन्मिलिन्दभ्रमकरतरलश्यामलस्निग्धतारे।**
**दैत्यौघेऽधर्मधर्माविधिविधिविरुधि क्रुद्धविच्छोणकोणे**
**त्रैलोक्यत्रातृनेत्रे बहिरनवहितस्वान्तमन्तर्विलोके॥ ७६॥**

**अभ्यर्ण इति**। कर्णयोः अभ्यर्णे समीपे अलिभरान्नुत्तं क्षिप्तम्। नुदधातोः 'नुदविदोन्देत्यादिना' विकल्पेन निष्ठातस्य नः। उत्तंसपद्मद्वन्द्वं कर्णोपरिधृतनलिनयुगलं स्खलितं किम्। उत्प्रेक्षात्र वस्तुरूपा। अत एव भ्राम्यन्मिलिन्दभ्रमसंपादकचञ्चलस्निग्धश्यामलतारके अधर्मधर्माविधिविधिविरुधि अधर्मो धर्माभावः तेन धर्माविधि. कर्त्तव्यानुष्ठानाभावः तेन विधिविरुधि। विपूर्वरुधधातोः क्विप्। ईदृशे दैत्यौघे क्रुद्धविच्छोणकोणे त्रैलोक्यत्रातुः दुष्टनिग्रहशिष्टानुग्रहाभ्यां त्रैलोक्यस्य पालयितुः श्रीनारायणस्य नेत्रे। अत्र परिकरालङ्कारः। बहिरनवहितस्वान्तं बाह्यविषयानपेक्षहृदयं यथा तथा। प्रत्याहारपूर्वकसमाधिना अन्तः हृन्मध्ये विलोके पश्यामि स्मरामि इत्यर्थः॥ ७६॥

**विष्णोरक्ष्णोरभीक्ष्णं स्मरतु सुमधुराः प्रोच्छलत्प्रेमधारा-**
**व्यात्युक्षीकेलयोनुक्षणसुभगतमश्रीकटाक्षच्छटाभिः।**
**याभ्यां नातिस्वदन्ते भवदवविवशान्मूर्च्छितात्मीयसेकं**
**सिञ्चद्भ्यां भक्तलोकान्स्फुरदुरुकरुणाशीतवीक्षाभिरद्भिः॥ ७७॥**

**विष्णोरिति**। अभीक्ष्णं संततं श्रीविष्णोः श्रीनारायणस्य अक्ष्णोः अक्षिणी स्मरतु। 'अधीगर्थदयेशाम्' इति कर्मणि षष्ठी। अनुक्षणं प्रतिक्षणं सुभगतमा अतिशयशोभना याः श्रीकटाक्षच्छटाः शृङ्गाररसतरङ्गितकमलापाङ्गविलोकनपरम्पराः ताभिः सुमधुराः अतिमनोहराः प्रोच्छलन्ती उद्वेलया प्रस्फुरन्ती या प्रेमधारा प्रणयप्रवाहः तया व्यात्युक्षीकेलयः

लक्ष्मीकटाक्षस्वप्रेमधाराकरणिका: परस्परेक्षणलीला: । व्यतिपूर्वादुक्षधातोः 'कर्मव्यतिहारे णच् स्त्रियाम्' इति णच् । 'णचः स्त्रियामञ्' इति स्वार्थे अञ् । आदिवृद्धिः । 'न कर्मव्यतिहारे' इति ऐजभावः । 'टिड्ढाणञ्' इति ङीप् । स्फुरन्ती प्रसरन्ती उरुकरुणा तया शीताः शीतलाः वीक्षाः अवलोकनानि एव आपः जलानि ताभिः । व्यस्तरूपकम् । भवदवेन संसारदावाग्निना विवशान्भक्तलोकान्मूर्च्छितात्मीयसेकं मूर्च्छां प्राप्तमात्मीयं भ्रातुष्पुत्रादिमिव । 'उपमाने कर्मणि च' इति कर्मणि णमुल् । सिञ्चद्भ्यां याभ्यामक्षिभ्याम् । 'रुच्यर्थानाम्' इति चतुर्थी । न अतिस्वदन्ते नातिरोचन्ते । भगवन्नेत्राभ्यां संसारतप्तस्वभक्ताधिकरणकरुणातुषारस्वकटाक्षवृष्टिर्यथा रोचते तथा रमाप्रेमातिशयमयकटाक्षदर्शनमनुप्रेमोत्कर्षसंपन्नापाङ्गालोकनतरङ्गितं नेति भावः ॥ अत्र रूपकालङ्कारः ॥ ७७ ॥

**वक्त्रेन्दाविन्दिरायाः शिथिलरसमिव ब्रह्मशर्वावकाण्डे**
**कुर्वद्दौर्भाग्यदुस्थावितरसुरगणप्रेक्षणेऽन्धंभविष्णु ।**
**एकौरस्याधिकेष्टाञ्छुकसनकमुखान्द्रष्टृसंमर्दनष्टा-**
**नन्वेष्टुं तातचारं चरदभिककुभं चक्रिचक्षुर्विचिन्त्यम् ॥ ७८ ॥**

**वक्त्रेन्दाविति** । इन्दिराया लक्ष्म्या वक्त्रेन्दौ शिथिलरसं शिथिलानुरागमिव ब्रह्मशर्वौ अकाण्डे अनवसरे अपराधाभावे दौर्भाग्यदुस्थौ सादरवीक्षणाभावात्कुर्वत् । इतरसुरगणप्रेक्षणे अन्यदेवगणविलोकने अन्धम्भविष्णु तद्वीक्षणाभावात् । कुतः । एकौरस्याधिकेष्टानेकस्वजातपुत्रादप्यनन्तगुणप्रेमपात्रीभूतान्स्वद्रष्टॄणां संमर्देन संकुलीभावेन नष्टानदर्शनं प्राप्ताञ्छुकसनकमुखाञ्छुकसनकादीनन्वेष्टुं मृगयितुमभिककुभं प्रतिदिशं तातचारं तात इव । 'उपमाने कर्त्तरि च' इति कर्त्तरि णमुल् । चरत्संचरच्चक्रिचक्षुः विचिन्त्यं ध्येयम् । अत्र लक्ष्म्याद्यपेक्षया भक्तेषु भगवतः प्रेमाधिक्यं सूचितम् । तथाच श्रीभागवते—'न तथा मे प्रियतमः पद्मयोनिश्च शङ्करः । न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान् ॥' इति ॥ ७८ ॥

**वृन्दैरिन्दीवराणां जलजवरयुजां स्वस्वपादप्रसादात्**
**कादाचित्कीं श्रयद्भिः श्रियमनिशशुभा दुर्लभा यस्य लक्ष्मीः ।**
**साक्षाल्लक्ष्म्या यदीक्षा समुदयति मुदे ब्रह्मणापीक्ष्यमाणा**
**चेतस्यालोचनीयं नयनयुगमदः पुष्पवल्लोचनस्य ॥ ७९ ॥**

**वृन्दैरिति** । जलजवरयुजां पद्मोत्तमयुक्तानामिन्दीवराणां नीलोत्पलानां वृन्दैः । कीदृशैः । भगवन्नेत्रयोः सूर्येन्दुरूपत्वात्स्वस्वपादप्रसादः स्वस्वकिरणानुग्रहः तस्मात् कादाचित्कीं दिवा पद्मानां रात्रौ कुवलयानां विकासाच्छ्रियं शोभां लक्ष्मीं च श्रयद्भिः सद्भिः अनिशशुभा नित्यमनोहरा यस्य नयनयुगस्य लक्ष्मीः शोभा दुर्लभा भवतीति शेषः । ब्रह्मणापि सकललोकस्रष्ट्रापि ईक्ष्यमाणा अभिलक्ष्यमाणा यस्य ईक्षा दर्शनं साक्षाल्लक्ष्म्याः तत्पत्न्याः मुदे प्रीतये समुदयाति संजायते । पुष्पवल्लोचनस्य पुष्पवल्लोचनं यस्य तस्य नारायणस्य अदः एतन्नयनयुगं चेतसि आलोचनीयं विभाव्यं भक्तैरिति शेषः ॥ ७९ ॥

अथ त्रिभिः श्लोकैः त्रिपादविभूतिसुलभं श्रीनारायणकपोलद्वयं वर्णयति—

**आकीर्णौ कर्णिकाग्रोचितखचितलसत्पद्मरागांशुरागै-**
**र्लाक्षालिप्तेन्द्रनीलस्थलकलिकुपितौ तौ कृपालोः कपोलौ ।**
**ध्येयौ ताम्बूलपङ्कैः शबलितवपुषौ चुम्बनाडम्बरोत्थै-**
**र्मत्वा यौ लाञ्छनं प्रोञ्छितुमुदितह्रियौ व्याप्रियेते प्रियेते ॥ ८० ॥**

**आकीर्णाविति** । कर्णिका कर्णभूषणं तदग्रे तत्परिसरे उचितखचिताः शोभाजनकतया निवेशिताः लसन्तः शोभमानाः ये पद्मरागाः माणिक्यमणयः तेषामंशुरागैः आकीर्णौ अत एव लाक्षालिप्तं यत् इन्द्रनीलस्थलं तेन यः कलिः कलहः श्यामवर्णे शोणिमसंक्रमाद्वर्णसाम्यस्पर्द्धाहेतुकः तेन कुपिताविव स्थितौ कृपालोः श्रीनारायणस्य तौ कपोलौ ध्येयौ । ते प्रिये लक्ष्मीविश्वधात्र्यौ यौ कपालौ चुम्बनाडम्बरोत्थैः स्वचुम्बनारम्भसंक्रान्तैः ताम्बूलपङ्कैः शबलितवपुषौ चित्रितरूपाविति मत्वा उदितह्रियौ लाञ्छनं ताम्बूलरागचिह्नं प्रोञ्छितुं व्याप्रियेते व्यापृतवत्यौ । अत्र रूपकगम्योत्प्रेक्षाभ्रान्तिमदलङ्काराणां सङ्करः ॥ ८० ॥

**संमृष्टे भूतिजुष्टैश्चलकरनिकरैः कुण्डलोद्यन्मणीनां**
**यच्छेदच्छेस्य गण्डस्थलमुकुरतले मानसं संमुखीने ।**
**चित्रं यत्राभिमुख्ये प्रसरति परमानन्दसंदोहसान्द्रं**
**योगीन्द्रास्ते स्वरूपं किमपि विरहिताकारमालोकयन्ति ॥ ८१ ॥**

---

१ पद्यचतुष्टयस्यास्य व्याख्या नोपलब्धा ।

स्निग्धश्यामामलेन्द्रोपलविपुलतरादर्शदृश्यं क्षतारि-
व्राताघातं कपोलस्थलफलकयुगं धर्मपालस्य धार्यम्।
सद्यः प्रच्छाद्य गात्रे स्थितिचतुरतया यत्र धर्मौ सकामा-
कामौ भ्रूखङ्गलेखे खलु मिलितशिखे युध्यमानौ दधाते॥ ८२॥

यत्सत्यं सत्यबद्धव्यवसिति विदिताख्यैकसख्यात्स्वकीया-
द्यां सर्वाशासवित्रीं श्रुतिरुदितवती विश्वविश्वासपात्रम्।
भक्तेच्छापूर्त्तिकैमिच्छिकनिगमवशाद्यत्र कर्णप्रसिद्धिः
शुश्रूषेत श्रियाढ्यां हृदि मृदितमले तां श्रुतिं श्रीप्रियस्य॥ ८३॥

अन्तःस्थं गन्तुकामेन्द्रियगणगजतायूथनाथं मदर्द्धे-
रुद्दामानं मनोनामकमृषिजनता यावपाशाद्रियेत।
याभ्यां बद्धात्मनां न प्रभवति भवजो दुस्त्यजोप्यस्तजन्मा
भूयो बद्धस्य बन्धोक्षजित इव हरेस्तौ स्मरेच्छ्रोत्रपाशौ॥ ८४॥

योगाध्वप्रौढतृष्णस्त्रुटितगुणघटो जुष्टतीर्थोमृतार्थी
धर्मद्ध्यै कूपकर्तुर्विशतु दृढपदं कर्णकूपं कृपालोः।
यद्भूषाश्मांशुपूरं निजनिकटचरं दर्शिताहावभावं
दिव्यर्षीणां दिदृक्षाभरपरितृषिताः पश्य धावन्ति गावः॥ ८५॥

**योगाध्वेति**। योगाध्वनि योगमार्गे अष्टाङ्गरूपे परमात्मध्याने प्रौढतृष्णः दृढरुचिः अत एव त्रुटितगुणघटः छिन्नगुणगणः घटाशब्दः समूहवाची निर्गुणः तादृशस्यैव तत्राधिकारात्। जुष्टतीर्थः सेवितगुरुः गुरुसेवां विना योगज्ञानाभावात्। ईदृशः अमृतार्थी मोक्षार्थी जनः स एव जलार्थी। 'पयः कीलालममृतम्' इत्यमरः। योगस्य मुक्त्युपायस्य अध्वनि यद्वा यः अगाध्वनि कुटुम्बपोषणार्थं द्रव्यसंपादनाय पवित्रमार्गभ्रमणेन प्रौढतृष्णः अतितृषित इत्यर्थः। त्रुटितौ गुणघटौ गुणकलशौ यस्य सः। तत्रापि जुष्टतीर्थः परिशीलितावतरणमार्गः कूपे पाषाणेष्टकाभिरवतरणार्थं सोपानानि लोकसिद्धानि भवन्ति। ईदृशः पान्थश्च।

धर्मस्य पूर्त्तिरूपस्य चतुर्वर्गान्यतमस्य च ऋद्ध्यै वर्द्धनाय कूपकर्त्तुः खानितकूपस्य । धार्मिका मार्गे कूपं खानयन्तीति प्रसिद्धिः । कोः पृथिव्याः उपकर्त्तुश्च । दुष्टनिग्रहशिष्टपालनाभ्यां रक्षकस्य अतएव कृपालोः श्रीनारायणस्य दृढं पदं समाध्यात्मकव्यवसायो यस्मिंस्तद्यथा तथा स्थिरपदं च । तादृशस्यैव कूपप्रवेशौचित्यात् । कर्णकूपं विशतु ध्यानेनेति भावः । दिव्यर्षीणां नारदादीनां दिदृक्षाभरेण कुण्डलमण्डितगण्डशोभादर्शने परितृषिता अतिशयेन तृषिताः जाताभिलाषाः पिपासायुक्ताश्च । गावः नेत्राणि धेनवश्च निजनिकटचरं दर्शितः आहावभावः कूपसमीपस्थजलाशयत्वं येन तम् । 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः । गवां जलपानार्थं कूपकर्द्भिः कूपसमीपे अवश्यं जलाशयः पाषाणादिभिः क्रियते प्रसिद्धं तत् । ययोः कर्णयोः भूषे कुण्डले तयोः अश्मांशवः तद्वर्त्तिमणिकिरणा एव पूरो जलसमूहः तं धावन्ति । पातुमिति शेषः । पश्य । अत्र गावः धावन्ति पश्येत्येकवाक्यं महाभाष्यकाराद्यभिमतम् । पश्य मृगो धावतीत्यादिवत् । न तु वाक्यद्वयं दर्शनान्तरसंमतम् । 'आख्यातशब्दे भागाभ्यां साध्यसाधनवर्त्तिता । प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥' अस्यार्थः—आख्यातशब्दे पश्य मृगो धावतीत्यादौ भागाभ्यां तिङन्ताभ्यां यथा शास्त्रे साध्यसाधनवर्तिता प्रकल्पिता घञादिष्वपि स एव क्रमः । एतेन धावतिक्रियापश्यतिक्रिययोः साध्यसाधनभावः । पश्यक्रियां प्रति धावनक्रियायाः कर्मत्वं च । तथा च अनेन गद्यपद्यभिन्नाश्रयिका या वर्त्तमाना धावनक्रिया तद्विषयकं यदिष्टसाधनीभूतं तदनुकूला भावनेति बोधः । दिङ्मात्रं दर्शितम् । ग्रन्थविस्तरभयात्प्रपञ्च उपेक्षितः । अत्र श्लेषोत्थापितो रूपकालङ्कारः ॥ ८५ ॥

अथ त्रिभिः श्लोकैस्त्रिलोकलोभनीये कुण्डले वर्णयति । अङ्गभिन्नत्वेपि भगवदाकल्पत्वाद्वर्णनौचित्यम् ।

त्रस्तौ वैधुन्तुदारुन्तुदरदकदनात्स्वाभयं याचमानौ
ये नूनं वेपमानावुडुपतितपनौ कर्णजाहं जिहानौ ।
प्रीत्या प्रत्युद्यतौ चायतनयनयुगेनात्ममूर्त्यन्तरत्वाद्
ध्यायेद्राहुद्रुहस्ते रुचिभररुचिरे कुण्डले गण्डलोले ॥ ८६ ॥

**त्रस्ताविति** । ये कुण्डले वैधुन्तुदाः राहुसंबन्धिनः अरुन्तुदाः मर्मस्पृशः ये रदाः

दन्ताः तेभ्यः कदनात् । 'विध्वरुषोस्तुदः' इति खश् । 'अरुर्द्विषदजन्तस्य मुम्' इति मुम् । त्रस्तौ अत एव वेपमानौ कर्णजाहं कर्णमूलं जिहानौ प्राप्तौ । 'ओहाङ् गतौ' शानचि रूपम् । स्वाभयं याचमानौ आत्ममूर्त्यन्तरत्वात् स्वापरमूर्त्तित्वेन आयतनयनयुगेन च प्रीत्या प्रत्युद्यतौ उडुपतितपनौ तपनस्याहिर्तत्वेपि उडुपतिशब्दस्याजादित्वात्पूर्वत्वम् । नूनं शङ्के रुचिभररुचिरे राहुद्रुहः गण्डलोले कुण्डले ध्यायेत् । अत्र राहुद्रुह इति राहुभयशमकत्वेन साभिप्रायत्वात्परिकरालङ्कारः । कुण्डलयोरुडुपतितपनत्वेन उत्प्रेक्षणादुत्प्रेक्षा च ॥ ८६ ॥

**स्थाप्यः संकल्पतल्पे मणिमकरमुखाकारशिल्पोस्य कर्णा-**
**कल्पोम्भोयन्त्रकल्पः कलयत सुधियोनल्परत्नांशुवेषः ।**
**त्रैलोक्यावासयोग्यामपि विपुलवपुर्वापिकां पूरयित्वा**
**धावँल्लावण्यपूरः परिवहति बहिः साध्वनेनाध्वनेति ॥ ८७ ॥**

**स्थाप्य इति** । मणिभिः मकरमुखाकारः शिल्पो यस्य सः अम्भोयन्त्रकल्पः जलमार्गस्य मकरमुखाकारत्वं लोके प्रसिद्धम् । अनल्पः रत्नांशुभिः वेषः नेपथ्यं यस्य सः । यद्वा रत्नांशूनां वेशः प्रवेशः यस्मिन्सः । अस्य नारायणस्य कर्णाकल्पः कर्णभूषणं संकल्पो मनोव्यापारः समाधिरिति यावत् । 'संकल्पः कर्म मानसम्' इत्यमरः । स एव तल्पं तस्मिन्स्थाप्यः स्थापनीयः । यथा तल्पाच्चिरमुत्तिष्ठति तथा चिरं समाधौ ध्येय इत्यर्थः । त्रैलोक्यावासयोग्यामपि भगवतः कुक्षिस्थितब्रह्माण्डत्वात् । विपुला विस्तीर्णा या वपुर्वापिका देहसरसी तां पूरयित्वा धावन्मार्गं प्राप्य प्रसरँल्लावण्यपूरः अनेन चाध्वना मार्गेण साधु यथा तथा बहिः परिवहति उच्छ्वसिति इति । हे सुधियः कलयत विचारयत । रुद्धमार्गस्य जलस्य मार्गान्तरेण निष्क्रमणं परिवाहः । 'जलोच्छ्वासाः परीवाहाः' इत्यमरः । अत्र मकरकुण्डलस्य जलप्रणालीमुखमकरयन्त्रत्वेन भगवद्देहस्य वापीत्वेन लावण्यस्य जलत्वेनोत्प्रेक्षणादुत्प्रेक्षालङ्कारः ॥ ८७ ॥

**द्रुह्यन्तौ मह्यमस्य श्रवणमलभुवौ भाविनौ दानवौ तौ**
**निद्रां गन्तुर्युगान्ते द्रुहिणहृदि समुत्थास्नु-संत्रासमित्थम् ।**

**साक्षात्प्रक्षालयन्त्यावपि मणिकिरणैर्निर्मलं निर्मिमाणे**
**कर्णान्तः कर्णभूषे प्रति भवभिजषः प्रौढचेतीबुभूषेत् ॥ ८८ ॥**

**द्रुह्यन्ताविति** । युगान्ते प्रळये निद्रां गन्तुर्निद्राणस्य अस्य श्रीनारायणस्य श्रवणमलभुवौ भाविनौ तौ दानवौ मधुकैटभौ मह्यं द्रुह्यन्तौ । 'क्रुधद्रुहेर्ष्यासूयार्थानामिति' चतुर्थी । इत्थं द्रुहिणहृदि समुत्थास्नु समुत्थितं संत्रासं भयं साक्षात्प्रक्षालयन्त्यौ ब्रह्ममनस्त्रासनिरसनं कर्णमलक्षालनमिति । मणिकिरणैः कर्णान्तः निर्मलं निर्मिमाणे भवभिषजः संसाररोगचिकित्सकस्य श्रीनारायणस्य कर्णभूषे कुण्डले प्रति लक्षीकृत्य । 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' इति कर्मप्रवचनीयसंज्ञा तद्योगाद्द्वितीया । प्रौढचेताः ध्यानेन कर्णभूषयोः निमग्नचेता भवितुमिच्छेत् । सन्नन्ताद्भूधातोर्बुभूषेदिति रूपम् । तद्योगे प्रौढचेतःशब्दादभूततद्भावे च्विः टिलोपश्च । अत्र कुण्डलमणिकिरणानां भगवत्कर्णान्तर्निर्मलीकरणस्य ब्रह्ममनस्त्रासनिरसनासंबन्धेपि तत्संबन्धवर्णनादतिशयोक्तिः ॥ ८८ ॥

अथ त्रिभिः श्लोकैः त्रिपादविभूतिलभ्यां श्रीनारायणभालपट्टीं वर्णयति—

**धीशैलूषीं विशाले सममसृणतले दीपिते दीपिकाभिः**
**कैरीटाश्मच्छटाभिर्नटयतु निटिलोत्सङ्गरङ्गे त्रिमूर्तेः ।**
**यत्र त्रैलोचनं लोचनमनलमयं बाधमानस्य दासां-**
**स्त्रासार्थं शर्वशत्रोस्तुलयति तिलको निस्तलो रोचनायाः ॥ ८९ ॥**

**धीशैलूषीमिति** । विशाले विस्तीर्णे सममसृणतले समानस्निग्धतले कैरीटाश्मच्छटाभिः किरीटसंबन्धिमणिश्रेणिभिः दीपिकाभिः दीपिते प्रकाशिते त्रिमूर्तेः सृष्टिस्थितिसंहारार्थं गृहीतब्रह्मादिमूर्तेः श्रीनारायणस्य निटिलोत्सङ्गरङ्गे ललाटपट्टनटनस्थले । सर्वाणि विशेषणानि निटिलोत्सङ्गरङ्गसाधारणानि । धीशैलूषीं धीरेव शैलूषी तां नटयतु भक्त इति शेषः । यथा रङ्गं शैलूषी न त्यजति तथा धीः निटिलोत्सङ्गं ध्यायेदित्यर्थः । यत्र निटिलोत्सङ्गे निस्तलः वर्तुलः रोचनायाः तिलकः दासान्भक्तान्बाधमानस्य शर्वशत्रोः कामस्य त्रासार्थमनलमयं त्रैलोचनं लोचनं शिवस्य नेत्रं तुलयति समीकरोति शिवनेत्रवत्कामं भीषयाति । रूपकालङ्कारः ॥ ८९ ॥

वक्त्राब्जासङ्गभृङ्गीभवदलककुलाकारकालाक्षराणां
बिभ्राणां धोरणीं हृद्भुवि भुवनगुरोर्भावयेद्भालपट्टीम् ।
अभ्यस्यन्तीव यस्यां पटुमुनिबटवोऽध्येतुमध्यात्मविद्यां
श्रद्धाबद्धावधाना अपरिचितचरीं मातृकां कामपीमाम् ॥ ९० ॥

**वक्त्राब्जेति** । वक्त्राब्जासङ्गभृङ्गीभवत् यत् अलककुलं तदाकारा ये कालाक्षरा मसीश्यामला वर्णास्तेषां धोरणीं श्रेणीं बिभ्राणां भुवनगुरोः श्रीनारायणस्य भालपट्टीं हृद्भुवि हृदयसीमनि भावयेत् । यस्यां भालपट्टयामध्यात्मविद्यां ज्ञानप्रतिपादिकां विद्याम् । 'अध्यात्मविद्या विद्यानाम्' इति' गीतोक्तेः । तस्याः सर्वोत्कृष्टत्वादध्येतुं श्रद्धायां बद्धावधानाः श्रद्धालवः पटुमुनिबटवः ब्रह्मचारिणो मुनिकुमारा अपरिचितचरीं पूर्वमनभ्यस्तां कामपि इमां मातृकामकारादि-क्षकारान्तां लिपिमभ्यस्यन्तीव । प्रथमं मातृकामयवेदानभ्यस्य तज्जन्यज्ञानेन भगवद्भालपट्टलिखितालकाभिन्नमातृकाभ्यासेन जनितब्रह्मानन्दा भवन्तीति भावः । अत्र रूपकोत्थापितोत्प्रेक्षालङ्कारः ॥ ९० ॥

कोटीराबद्धनानाविधमणिकिरणैरुल्बणालेख्यलक्ष्मीः
श्रीभर्तुर्भालभित्तिः स्वलवणिमसुधास्निग्धमूर्त्तिर्विभाव्या ।
प्रत्याहारोपवासादनु दनुजरिपुध्यानपीयूषपातै-
स्तन्द्रालुः पारयित्वा श्रयति यतिमतिर्यामुपघ्नीं चिराय ॥ ९१ ॥

**कोटीरेति** । कोटीराबद्धानां नानाविधमणीनां किरणैः उल्बणा उत्कटा आलेख्यलक्ष्मीः चित्रशोभा यस्यां सा । स्वलवणिमा स्वकीयलावण्यं स एव सुधा दग्धशङ्खनखजन्यपाषाणादि-निर्मितगृहपरिष्कारकः द्रव्यविशेषः । तया स्निग्धमूर्त्तिः । यथा गृहे सुधालेपेन प्रतिबिम्बादिकं जायते एवमङ्गे लावण्येनेति भावः । श्रीभर्त्तुर्भालभित्तिः ललाटकुड्यं विभाव्या ध्येया । भालभित्तिकार्यं वर्णयति—प्रत्याहार इन्द्रियाणां स्वविषयेभ्यो निवृत्तिः स एव उपवासः भोगाभावात् । तस्मादनु अनन्तरं दनुजरिपोः श्रीनारायणस्य ध्यानं मनसो ध्येयैकनिष्ठतया-वस्थानं तदेव पीयूषं तस्य पानानि तैः । ध्यानस्य प्रत्याहारानन्तरं कर्त्तव्यत्वात् । पारयित्वा पारणां कृत्वा । उपवासस्य व्रतरूपत्वात् । 'पारणान्तं व्रतं कुर्यात्' इति स्मरणात् । तन्द्रालुः घूर्णमानः उपोषितस्य भोजनानन्तरं तन्द्रायोगात् यतिमतिः सा कापि स्त्री यां

भालभित्तिं चिराय उपघ्नीं पृष्ठावलम्बम्। 'उपघ्न आश्रय' इति हन्तेरप्। श्रयति। तन्द्रालुः किमप्यालम्ब्य तिष्ठतीति भावः। अत्र रूपकालङ्कारः॥ ९१॥

अथ त्रिलोकमोहनकाममोहिनीं भ्रूलतां त्रिभिः श्लोकैर्वर्णयति—

**त्रातुं तापत्रयार्त्तान्स्वचरणशरणांश्छायोच्छ्रायभाजा**
**कारुण्योदञ्चि किंचिच्चलितललितया संज्ञयाश्वासयन्तीम्।**
**आम्नायस्वर्द्रुमाणां स्थगितशिखमुपस्कुर्वतीं तां त्रिधाम्नो-**
**भ्रूनाम्नीं कल्पवल्लीं विपुलबहुफलां पालयेच्चित्तसीम्नि॥ ९२॥**

**त्रातुमिति।** तापत्रयेण आधिभौतिकाध्यात्मिकाधिदैविकरूपेण आर्त्तान् स्वस्य भगवतः चरणशरणान्स्वमूलशरणांश्च उच्छ्रायभाजा उन्नतया छायया शोभया अनातपेन च त्रातुं कारुण्येन उदञ्चि उद्यतं यत्किंचिच्चलितं चलनं तेन ललितया संज्ञया आकारणेन च आश्वासयन्तीं दूरस्थान्हस्ताङ्गुल्यादिचालनेनैव मन्मूलमाश्रित्य संतापं त्यजतेति भक्तान्स्वचलनेनैव आश्वासयन्तीमिति भावः। छायातिशयार्थं तद्विस्तारमाह—आम्नायस्वर्द्रुमाणां वेदकल्पद्रुमाणां स्थगितशिखमाच्छन्नशिखरं यथा तथा उपस्कुर्वतीम्। 'उपात्करोतौ भूषणे' इति सुट्। षष्ठी च। विपुलबहुफलां चतुर्वर्गफलां बहुफलवतीं च त्रिधाम्नः त्रिमूर्त्तेः यद्वा त्रिषु वेदेषु लोकेषु धाम स्थानं यस्य एतत्प्रतिपाद्यस्य श्रीनारायणस्य तां भ्रूनाम्नीं कल्पवल्लीं चित्तसीम्नि पालयेत्। वल्लीनां शोभनस्थानोपस्थानपालनयोः युक्तत्वात् चेतसि ध्यायेत्॥ रूपकालङ्कारः॥ ९२॥

**स्मर्त्तव्यः सादरं स्वे मुकुटपरिसरे स्थापितः शार्ङ्गिणापि-**
**भ्रूचापो रूपदर्पाद्रतिपतिभृशतां मन्यमानस्तृणाय।**
**संहर्त्तुं वैरिणः षण्मुनिहृदि गुणितं योगतः प्रस्फुरन्तं-**
**यं पश्यन्पुष्पचापोपसरति चपलं ह्रीभयन्यस्तशस्त्रः॥ ९३॥**

**स्मर्त्तव्य इति।** शार्ङ्गिणा शार्ङ्गधनुर्भृतापि स्वे मुकुटपरिसरे मुकुटपार्श्वे मुकुटवच्छिरसि सादरं स्थापितः शार्ङ्गचापादप्यधिकः रूपदर्पाद्रतिपतिभृशतां कन्दर्परूपाधिक्यं तृणाय मन्यमानः। 'मन्य कर्मण्यनादरे' इति चतुर्थी। भ्रूविलासस्य तावच्छोभातिशय-

संपादकत्वाद्भ्रूचापः स्मर्त्तव्यः । षड्वैरिणः कामादीन्संहर्त्तुं योगतः ध्यानान्मुनिहृदि गुणितमावृत्तिमन्तं पुनः पुनः ध्यानावृत्त्या प्रस्फुरन्तं यं पश्यन्पुष्पचापः कामः निःसारचापत्वात् ह्रीभयाभ्यां न्यस्तशस्त्रः त्यक्तायुधः चपलमपसरति पलायते रूपदर्पहान्या षड्वैरिसंहारेण च ह्रीभययोगान्न्यस्तशस्त्रत्वमिति भावः । अत्र रूपकोत्प्रेक्षातिशयोक्तीनां सङ्करः ॥ ९३ ॥

**संयोक्तुं योगिभोगिद्वयमपि युगपन्मुक्तिभुक्त्यङ्गनाभ्या-**
**मिष्वभ्यासार्थसज्जीकृतवितनुधनुर्युग्मकार्योद्यतेन ।**
**प्रत्याक्रष्टुं यथेष्टं विषयवनजुषं चित्तमत्तेभमिष्टं**
**चेष्टेत ध्यानबाणामसृणसृणियुजा त्रैयुगभ्रूयुगेण ॥ ९४ ॥**

**संयोक्तुमिति** । योगिभोगिद्वयं योगिभोगिपुरुषद्वयमपि युगपदेकदा मुक्तिभुक्त्यङ्गनाभ्यां संयोक्तुमिष्वभ्यासार्थं शरप्रयोगार्थं स्त्रीपुरुषसंयोगस्य कामबाणप्रयोगसाध्यत्वात्सज्जीकृतं यद्वितनोः कामस्य धनुर्युग्मं तत्कार्योद्यतेन तत्कार्यनिर्वाहकत्वेनोद्युक्तेन । पुनश्च यथेष्टं स्वेच्छया विषयवनजुषं विषयवनं भजन्तमिष्टमादरणीयं स्वकीयत्वात् । चित्तमत्तेभं प्रत्याक्रष्टुं प्रत्याहर्तुं ध्यानबाणेन अमसृणया अतीक्ष्णया सृणियुजा अङ्कुशयुग्मेन तदभिन्नेन त्रियुगः नारायणः तत्संबन्धिना भ्रूयुगेण चेष्टेत । यथा हस्तिपः मत्तहस्तिनमाक्रष्टुमङ्कुशेन चेष्टेत तथा योगी भगवद्भ्रूयुगध्यानेन चित्तमिति भावः । अत्र रूपकालङ्कारः ॥ ९४ ॥

अथ त्रिभिः श्लोकैस्त्रिलोकदुर्लभसौरभ्याकुलान्कुन्तलान्वर्णयति—

**सान्द्रैरुद्धासिहासान्सुरतरुकुसुमैरिन्द्रनीलाधिनीला-**
**नन्तःप्राप्तप्रकाशान्रचयतु रुचिराञ्श्रीहृषीकेशकेशान् ।**
**सार्द्धं स्पर्द्धानुबन्धादिव समुदयते व्योमकेशस्य केशै-**
**र्येषामभ्रान्तशुभ्रोडुनिवहनिबिडाकाशनीकाशभावः ॥ ९५ ॥**

**सान्द्रैरिति** । सान्द्रैः गर्भकापीडादिविन्यासविशेषान्निबिडैः सुरतरुकुसुमैः उद्भासिहासान्हसत इव स्थितानिन्द्रनीलापेक्षया अधिकनीलान्रुचिराञ्श्रीहृषीकेशस्य श्रीनारायणस्य केशानन्तःप्राप्तप्रकाशान्समाधिना हृदयप्राप्तसंनिधानान्रचयतु । भक्त इति शेषः । व्योमकेशस्य शिवस्य केशैः सार्द्धं स्पर्द्धानुबन्धाद्येषां भगवत्केशानामभ्रान्ते अभ्रकालान्ते शरदि

शुभ्रोडुनिवहेन शरत्काले मेघाभावात्तारकाणां शोभातिशयात् । निबिडं सान्द्रं यदाकाशं तेन नीकाशभावः सादृश्यं समुदयत इव । श्यामलानां कल्पद्रुमकुसुमखचितानां हृषीकेशकेशानां यदुडुनिबिडाकाशसादृश्यं तद्व्योमकेशस्पर्द्धयेति हेतूत्प्रेक्षा ॥ ९५ ॥

**हस्तीन्द्रस्यार्त्तिसिन्धूद्धरणमभि तताभीतिहस्तस्य दूरा-**
**दार्त्तत्राणस्य दूरप्रसृमरमहिमा केशहस्तो विचिन्त्यः ।**
**यं हस्तीकृत्य भक्त्या भवदवदहनज्वालजालैर्विहस्ताः**
**कुर्वन्ति स्वान्तदूरामपि दुरधिगमां हस्तसान्मोक्षलक्ष्मीम् ॥ ९६ ॥**

**हस्तीन्द्रस्येति** । हस्तीन्द्रस्य आर्त्तिसिन्धूद्धरणमभि अभिलक्ष्य दूरात्तताभीतिहस्तस्य ग्राहात्त्वां रक्षिष्यामीति सुदूरविस्तारितोभयहस्तस्य सतः आर्त्तत्राणस्य आर्त्तानां त्राणं यस्मात्तस्य श्रीनारायणस्य दूरप्रसृमरः दूरप्रसारी महिमा यस्य सः । महिमा च दैर्घ्यं तेनैव संसारतारकत्वं च । प्रपूर्वस्य सृधातोः 'सृघस्यदः क्मरच्' इति क्मरच् । केशहस्तो विचिन्त्यः स्मरणीयः । भवदवदहनज्वालजालैः विहस्ताः संसारतापव्याकुलाः भक्त्या यं केशहस्तं हस्तीकृत्य पक्षीकृत्य दुरधिगमां दुष्प्रापामत एव स्वान्तदूरामपि मोक्षलक्ष्मीं हस्तसात् हस्ताधीनां कुर्वन्ति ॥ ९६ ॥

**कौटिल्यं दुष्टलोके किल सुजनजने मार्दवं वर्षुकाब्दो-**
**त्कर्षं क्लेशाभितप्ते विभजदिव विभोः कैश्यमन्तर्विमृश्यम् ।**
**किं नातिस्निग्धतायास्तदुचितमुदितं मोचयद्यत्स्वबन्धून्**
**भक्तान्संसारबन्धात्स्वयमपि सततं बन्धमङ्गीकरोति ॥ ९७ ॥**

**कौटिल्यमिति** । दुष्टलोके दैत्यादौ कौटिल्यं वक्रत्वं सुजनजने भक्तादौ अत्र सामान्यविशेषभावेन जनशब्दस्य पौनरुक्त्यम् । यद्वा सुजनाज्जायते इति सुजनजनः । जन्-धातोः पचाद्यच् । तस्मिन्मार्दवं क्लेशाभितप्ते संसारदुःखसंतप्ते वर्षुकाब्दोत्कर्षं सजलजलद-नीलिमोत्कर्षं विभजदिव स्थितं दुष्टादिषु स्वगुणान्कौटिल्यादीन्यथास्वभावं दर्शयदिति भावः । किलेति प्रसिद्धम् । विभोः श्रीनारायणस्य कैश्यं केशवृन्दम् । 'तद्वृन्दे कैशिकं कैश्यम्' इत्यमरः । अन्तः मनसि समाधिना विमृश्यं विचार्यं ध्येयमित्यर्थः । भक्तैरिति शेषः ।

यत्कैश्यं स्वबन्धून्भक्तान्संसारबन्धान्मोचयत्सत्स्वयमपि सततं बन्धं हेमसूत्रादिबन्धनमङ्गीकरोति । यदतिस्निग्धतायाः अतिमसृणत्वस्य अनुरागस्य च उचितमुदितं किं न ? उदितमेव । स्वबन्धनाङ्गीकारेण परबन्धनमोचनं स्निग्धानां साधूनामौचित्यादिति । स्निग्धतादर्शनकौटिल्यादिविभजनासंबन्धेपि तत्संबन्धवर्णनादतिशयोक्तिः ॥ ९७ ॥

अथ त्रिलोकालोकक्षममणिमयं किरीटमाकल्पत्वेन भगवदङ्गत्वात्त्रिभिः श्लोकैर्वर्णयति—

**शुभ्रैरभ्रंलिहैरुन्मुखमणिकिरणैर्ब्रह्मरन्ध्रोपरिष्टात्**
**आर्चिर्मार्गं सुदुर्गं निजभजनमृते दर्शयद्भक्तपान्थान् ।**
**पश्यन्नश्यन्निमेषं मणिमयनयनैर्विस्मयेनास्य सृष्टिं**
**स्मर्त्तव्यं प्रत्नपुंसः स्फुटरुचि मुकुटं कूटवद्रत्नसानोः ॥ ९८ ॥**

**शुभ्रैरिति** । शुभ्रैः स्वभावान्मार्गस्य सात्विकत्वात् । अभ्रंलिहैरत्युच्चतमैः ऊर्ध्वमुखैर्मणिकिरणैः ब्रह्मरन्ध्रोपरिष्टात् ब्रह्मरन्ध्रं नाम योगिमात्रवेद्यं मूलाधारादारभ्य ब्रह्मरन्ध्रव्यापि कल्पान्तरस्थं सुषुम्नारन्ध्रं तदुपरि निजभजनमृते निजभजनं विना सुदुर्गं स्वभजनस्य तत्प्रापकत्वात् । अर्चिर्मार्गमग्न्याद्यभिमानिदेवताधिष्ठितं मार्गम् । 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' इति गीतोक्तेः । भक्तपान्थान्दर्शयत् । यथा सुकृती जनः पान्थसुखसंचाराय दीपादिभिः मार्गमुद्भासयति तथा भक्तानां भगवल्लोकप्राप्त्यर्थं मणिकिरणैरर्चिर्मार्गं दर्शयतीति भावः । अस्य भगवतः सृष्टिमेतत्कर्त्तृकां मणिमयनयनैः विस्मयेन नश्यन्निमेषं पश्यदिव स्थितम् । रत्नसानोः मेरोः कूटवत् स्फुटरुचि प्रत्नपुंसः पुराणपुरुषस्य श्रीनारायणस्य मुकुटं स्मर्त्तव्यम् । अत्रार्चिर्मार्गदर्शनाद्यसम्बन्धेपि तत्सम्बन्धवर्णनादतिशयोक्तिः ॥ ९८ ॥

**रत्नौघोद्यत्कराग्रैर्मुखमभि ककुभां पत्रलेखा लिखन्तं**
**बध्नन्तं सान्द्रचन्द्रातपततिमभितो भक्तमुक्त्युत्सवाय ।**
**अश्रीयोदग्रभावाद्गगनतरुशिरःस्मेरताराप्रसूना—**
**न्युच्चान्युच्चेतुकामं किमु हृदि कुरुतां कैटभारेः किरीटम् ॥ ९९ ॥**

**रत्नौघेति** । स्वनिष्ठरत्नौघस्य उद्यन्तः करा एव करास्तदग्रैरङ्गुलिभिश्च ककुभां

दिशां स्त्रीलिङ्गत्वान्नायिकानां च मुखं प्रारम्भं वक्त्रं च अभि सर्वत: पत्रलेखा: पत्रावली: लिखन्तं भक्तमुक्त्युत्सवाय भक्तानां मुक्तिरूपोत्सवार्थमभित: रत्नौघोद्यत्कराग्रै: सान्द्रचन्द्रातपततिं निबिडवितानसमूहं बध्नन्तं रत्नकिरणानां नानावर्णत्वाच्चन्द्रातपसाम्यम् । उत्सवे चन्द्रातपबन्धनं प्रसिद्धम् । अग्रीय: किरीटशिखानां य उदग्रभाव: उन्नतत्वं तस्मात् उच्चानि उन्नतानि गगनमेव तरुशिर: तत्र स्मेराणि विकसितानि तारा एव प्रसूनानि उच्चेतुकामं किमु तरुशिर:-कुसुमोच्चयनमत्युन्नतसाध्यत्वात् । ईदृशं कैटभारे: श्रीनारायणस्य किरीटं हृदि कुरुतां भक्त इति शेष: । अत्र सर्वत्रोत्प्रेक्षालङ्कार: ॥ ९९ ॥

**योगीन्द्राणां द्विषः षड्विषधरविषमानिच्छतां रोद्धुमद्धा**
**वज्रौघोत्थैर्मघोनो धनुभिरगणितैश्चित्रमुद्यद्गुणैश्च ।**
**निर्वाणीभूय भूयः सफलयति मतिं योभयाभावमूलं**
**नश्यद्दोषां विभूषां महयतु महितां मौलिमाम्नायमौलेः ॥ १०० ॥**

इति श्रीविद्याकरपुरोहितविरचितं नारायणशतकं संपूर्णम्।

**योगीन्द्राणामिति ।** विषधरविषमान्षड्द्विष: कामादीन् रोद्धुमिच्छतां योगीन्द्राणां मतिमद्धा निश्चितं वज्रौघोत्थै: सुखचितहीरकसमूहोत्थितै: । 'इन्द्रायुधेन सदृशं यस्माज्ज्योति: प्रकाशते । वर्णत: कुन्दसदृशं हीरकं तत्प्रशस्यते ॥' इति रत्नशास्त्रात् । कुलिशोत्थितैश्च । 'अनुद्गीर्णसुरायुधम्। वृत्रस्य हन्तु: कुलिशम्' इति कालिदास: । उद्यद्गुणै: उदितशुक्लादिरूपै: सज्जमौर्वीकैश्च । अगणितै: मघोन: धनुभि: इन्द्रायुधै: । अत्र 'धन शब्दे' इति धातोरौणादिक उप्रत्यय: नतु 'धनेरुस्' इति उस् प्रत्यय: । अयं धनुशब्द: पुंलिङ्ग: । तै: उपलक्षिता या योगिजनषडहितविषधरत्रासार्थं वज्रोत्थितशक्रधनुसहितेति भाव: । तथाच कविसमये—'शक्रायुधं समालोच्य संकुचन्ति बिलेशया:' इति । या उभयाभावमूलं षड्द्विषां तद्रोधनेच्छायाश्च अभावे मूलं स एव पापपुण्याभाव: तस्य मूलम्। पापपुण्याभावं विना मोक्षानुपपत्ते: । निर्वाणीभूय मोक्षहेतुर्भूत्वा वाणस्याभावो निर्वाणम् । अव्ययीभाव: । शराभावीभूय भूय: बहु यथा स्यात्तथा सफलयति सफलां करोति स्वध्यातॄणां योगिनां मतिं स्वध्यानफलमोक्षभाजं करोतीत्यर्थ: । फलस्य ध्यातृगतत्वेपि मतिद्वारा तल्लाभा-

न्मतिगतत्वमुक्तम् । अन्यत्र सफलयति फलं लोहनिर्मितं शराग्रं तत्सहितां करोति । चित्रमाश्चर्यम् । इन्द्रधनुषो निर्गुणत्वे सगुणत्वं बाणाभावे तद्गतफलाभावे सिद्धेपि मतिसाफल्यमिति चित्रम् । स्मृत्या नश्यन्तो रोगाः दोषादयः यस्याः तामतः महितां पूजितामाम्नायमौलेः वेदशिरोमुकुटस्य श्रीनारायणस्य मौलिं विभूषां मुकुटाभिन्नालङ्कारं यद्वा आम्नायमौलेः वेदशिरसः विभूषां प्रकरणान्नारायणीयां मौलिं मुकुटं यद्वा वाच्यवाचकाभावभेदेपि न आम्नायः श्रीनारायणः तथाच श्रीभागवते—'वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम' इति । तस्य मौलेः शिरसः विभूषां मौलिमिति पूर्ववत् । महयतु भक्त इति शेषः । अत्र श्लेषोत्थापितो विरोधालङ्कारः ॥ १०० ॥

इति श्रीपीताम्बरकविचन्द्रकृता श्रीनारायणशतकटीका समाप्ता ।

---

विद्वन्मदद्विरदसिंहनृसिंहसूनुः
पीताम्बरः कविकदम्बकशर्वरीशः ।
विद्याकराभिधपुरोहितसूरिक्लृप्त—
नारायणीयशतकस्य चकार टीकाम् ॥

समाप्तोयं ग्रन्थः ।

# EXPLANATORY NOTES

St. 1. चिद्रत्नम्=jewel of knowledge. Knowledge here is the knowledge of the self—according to the commentator, that of the identity of the individual with the universal Self. चिरत्नम्='long standing' implies the care that should naturally be taken. अक्षुण्णदशामासाद्य=having found an intact state=having assumed the full splendour. अंहस्=the obstacles presented by the gods. तमस्तोमः= mass of ignorance, the ramification of the differences due to Avidyā.

St. 2. अम्भोजालया=lotus-dweller, Lakṣmī. The breast of Viṣṇu is the resting place of Lakṣmī, and is here fancied as a seat of lotus, on account of its natural softness and fragrance, and redness due to the rays of the Kaustubha. स्नेहार्द्रं प्रस्नुवानाम् implies also the exudation of the breast-milk and संचार also the movement of a child on its mother's lap, as Lakṣmī is said to be पद्मसंभवा 'lotus-born.'

St. 3. अमृतरसमधुनः suggests that immortality is easy within reach of the devotee. अमलम्=stainless. Stainless is to be understood in the sense of removing all stains, such as अविद्या (illusory view of things), अस्मिता (egoism), etc., from the mind. आम्नायमौलि = the crown of the Veda. The crown of the Veda is the Upaniṣads which reveal the first knowledge of the Supreme Being. This extra-ordinary pair of lotuses is thus fancied to be worn, as a bright ornament, on the head by the personified Veda.

St. 4. Three supreme deities, Brahmā, Śiva and Pūṣan, charged respectively with creation, destruction, and liberation are here portrayed as bowing in all humility at Nārāyaṇa's feet. Brahmā is said to fashion this universe, seated on the lotus of His navel, after the eternal models in His stomach and to refer to them in cases of doubt. The trident is Śiva's instrument of destruction. Pūṣan (the Sun-god) is requested in the 'Īśopaniṣad' to uncover the truth, the face of which is covered with a golden vessel.

St. 5. निर्वाण=extinction. Extinction is, here, that of the flame of individual life or the cessation of the round of birth and

death. धर्मद्रवी=the piety-melting (*i.e.* melting in furtherance of piety) is the Ganges, which is said to have issued from the feet of Viṣṇu. ऊर्ध्वे रेखिके=the upward lines. These are the extraordinary marks on the soles running from the middle of each to the great toe.

St. 6. The idea in जन्ममृत्यू जिहासुः is fostered by that in अमृतरसं... किरन्त्यौ. This is meant to give an idea of the maddening charms of the shanks.

St. 7. The reference is to the Vāmana incarnation जङ्घाकरिकः= active with the shanks. जाङ्घिकत्वम्=swiftness of feet.

St. 8. The king of the demons is Hiraṇyakaśipu whose belly was torn by Nṛsiṁha. The fancy rests on the assumption that the arms of an exceptionally great person reach up to the knees.

St. 9. ऊरुपर्व=knee. शुचिरसचतुरैः-that are expert in the sentiment of love स्वतन्त्रोऽपि etc.—this indicates the overpowering charms of the knees.

St. 10. The fancy with regard to the lotus-plant of the heavenly Ganges, believed to be golden, rests on the implication of पुण्डरीकेक्षण, which may also mean 'looking like Puṇḍarīka, one of the elephants of the quarters. The lotus-eyed is Nārāyaṇa and the daughter of the ocean is Lakṣmī.

St. 11. When Nārāyaṇa, as son of Dharma, practised austerities, Kāma and other gods tried to swerve Him by offering temptations. Nārāyaṇa thereupon produced Urvaśī from His thigh and put them to shame.

St. 12. The Yogins, absorbed in contemplation, reside, so to say, in the body of Nārāyaṇa, of which the thigh may be fancied to be the supporting post or pillar. The hearts, fancied to be warriors, have to take exercise with the help of the thigh in order to acquire strength.

St. 13. Nārāyaṇa's lower belly is pictured here as a raised bank offering rest, and therefore being of great help to the intellect of the ascetic desiring to get across the ocean of rotation.

St. 14. चक्रमन्यत्—one wheel being His weapon Sudarśana. अन्तरङ्गम्—just as in grammar the law relating to the inner member

(अन्तरङ्ग) is stronger than that relating to an outer member (बहिरङ्ग) of a word, so also here the lower belly, pictured as a wheel, is stronger than Sudarśana.

St. 15. शान्तसाम्राज्यसुस्थम्. The minds' sovereignty over the quiet appears to consist in its being itself pre-eminently free from passions as an effect of its being absorbed in the meditation of the lower belly of Nārāyaṇa.

St. 16. For the images one should remember that Nārāyaṇa has a dark complexion and wears a yellow piece of cloth. The undulations are the wrinkles near the navel. A deep navel is considered a mark of beauty and the line of hair between the navel and the breast is frequently fancied to be a serpent issuing out of a pit.

St. 17. There is a pun on the word pīta which means 'drunk' as well as 'yellow.' The idea is that other yellow things are called pīta not because they are yellow but because they are submerged in the lustre of Nārāyaṇa's cloth. The lord of birds is Garuḍa who has yellow wings and is the vehicle of Nārāyaṇa. The golden mountain is Sumeru, the seat of the gods, who fought a battle with Garuḍa, when the latter tried to carry off nectar.

St. 18. The mythical river Jambū is said to issue from the juice of the enormous quantity of fruits of a huge Jambū tree. The fruits of this tree are said to be as big as elephants. The mud on its banks is said to be pure gold, which is therefore called Jambūnada. The crimson rays of the rubies is here fancied to be the juice of rose-apples and is further fancied as the stream of blood of Madhu and Kaiṭabha, for the manner of whose death *cf.* also vs. 14 and 39.

St. 19. Envelopment and disturbance (of the mind), as excluding the true knowledge, are the two functions of Māyā that are held to be the root-cause of the soul's individual existence. These being the functions—although in a different sense—also of the garments, it would appear curious that the latter should remove them from others. The word Hari derived from root हृ 'to remove', is significant.

St. 20. The navel is fancied to be a basin for watering the creeper-like line of hair between itself and the breast. Solitary places, especially caves, are sought by Yogins, so Brahmā residing in the navel-lotus that is at the root of this universe is said to practise control of breath (Prāṇāyāma) in this cave of a navel. Nārāyaṇa is said to withdraw the universe into His belly, and the navel is fancied to be the entrance-door, for such a purpose.

St. 21. The idea is that the intellect of one who is absorbed in the meditation of the beauties of the navel is purged of all impurities in the same way as one's body is, when plunged in holy waters. For स्त्रहुरावेशनम् *cf.* notes on St. 4. The line of hair, being black, is fancied to be bees rushing towards the navel-lotus.

St. 22. अभिनवैः = ever fresh. स्वान्तर्निलीनैः = absorbed through meditation. सर्पहन्त्रा by the snake-killer Garuḍa. सौभरि—a certain hermit who took pity on the lot of the fish living in a pool of the Yamunā, near which he practised austerities, cursed Garuḍa saying that if he entered that pool to kill fish, he would immediately die. The Nāga Kālīya took advantage of this and began to live there. Here the line of hair has been fancied as Kālīya, owing to a similarity in length and colour.

St. 23. The figures here are based on the sin-removing and liberating powers of the line of hair as a part of the Lord's body and also on its dark colour. The two co-wives that are fancied to be querrulous are Lakṣmī (goddess of fortune) and Kṣiti (the earth).

St. 24. The sky is said to have issued from the Lord's navel *cf.* Ṛgveda 10-90-14. 'नाभ्या आसीदन्तरिक्षम्' It is here fancied to be the dark line of hair which has been so diversely viewed in stanzas 20-23 and also in the following amounts to saying that the line of hair, viewed as the infant sky, may compare favourably with the sword and the just-born infant in respect of dark colour and slenderness respectively.

St. 25. The line of the hair is here clad in three different fancies: (i) as rope laid down by Kāma to rescue his mother's

eyes ( Kāma's bow-string is said to be made up of bees ); ( ii ) as a garland of blue lotuses laid round Nārāyaṇa's neck by Brahmā; and ( iii ) as the collective rays of the sapphires in the girdle.

St. 26. The figures are based on the complexions of Lakṣmī and Nārāyaṇa which are yellowish and dark respectively. धीक्षोभदक्षम् = expert in disturbing the feelings = rousing amorous feeling in their hearts. विद्युल्लोला = fickle as lightning: the goddess of fortune is popularly believed not to stay long anywhere.

St. 27. श्रीवत्स = a curl of hair on Nārāyaṇa's breast, said to be white. It is further celebrated in Sts. 33–35. The gem Kaustubha and Lakṣmī both came out of the ocean, when it was churned by the gods and the demons. The mark of saffron paste contracted from Lakṣmī's breasts would merge in the crimson rays of Kaustubha. तरुणार्क = the young sun = the sun just risen.

St. 28. Nārāyaṇa's breast is here pictured as a comfortable bed prepared with the best flowers, on which the hermit's mind finds undisturbed repose. This amounts to saying that through meditation on the breast one's mind is freed from all mundane troubles and one enjoys a blissful respite that is tantamount to a pleasant sleep.

St. 29. The apparent contradiction is cleared by the fact that although Nārāyaṇa protects the city of the immortals, the Daityas that are killed by Him are also entitled to a heavenly life.

St. 30. मणि = the precious stone, Kaustubha mentioned in stanza 27 and further described in stanzas 31-32, जैत्रं नेत्रम् = the victorious eye = the fiery third eye of Śiva, able to burn the three worlds at the time of dissolution.

St. 31. जननयनमुदे कौस्तुभाह्वां वहन्तम्—The poet means to impress that, because of its dazzling splendour, it is really the sun, but just to give pleasure to the devotee's eyes, it appears as the gem Kaustubha. The crimson rays of Kaustubha would be reflected in the waters of the milky ocean and make it take the colour of blood.

St. 32. The yellow image of Lakṣmī reflected in the blue surface of Viṣṇu's breast would look green and be mistaken for the goddess Earth—the co-wife of Lakṣmī—bearing marks of vege-

tation. It should be noted once for all that black and dark blue are denoted by the same terms and often confused in Sanskrit literature and that parts of the body, such as the cheek or the breast, of beautiful persons can reflect things is a popular fancy in ancient Indian poetry. वर्णसाम्यावृतायाम्=screened with the equality of lustre—the reflection also would get crimson, if Lakṣmī is reddened with anger, and would thus be subdued in the rays of the Kaustubha. नव्यार्कमित्रम्=companion to the new sun—resembling the new sun.

St. 33. केलीबालवीरुच्छिरसि = at the top of the young sport-creeper. The sport-creeper refers here to the line of hair on Nārāyaṇa's breast. दोहदस्य प्रदानात् = because of granting the desire—it is a poetic conventional belief that plants bear flowers and fruits when their desire is fulfilled and the mode of fulfilment is also curious, such for instance, as a young woman's kick or side-way glance.

St. 34. सत्वगुण—one of the three constitutions of Prakṛti that is responsible for all knowledge and virtue, is said to be white and Nārāyaṇa is said to clothe Himself with it in order to protect the universe.

St. 35. The charming curl of hair is here made the subject of three beautiful fancies. It is pictured: (i) as the moon that opens up the heart-lilies of the devotees, (ii) as the smile of Nārāyaṇa's personal beauty at the breast, and (iii) as a foamy whirlpool from which the eye, once cast has no escape (*i.e.*, it is so attractive that the eyes once set would fair cling to it.)

St. 36. विषयविषरसोदन्यया धावितानां गवां संरोधार्थम्—for restraining the senses (the cows) that run about with the thirst for the poisonous juice of the sense-objects.

St. 37. वर्णगन्धेन=by the fragrance befitting the colour. वर्णगन्धः = a particle of the colour.

St. 38. भुजग=शेष. पुरा formerly—at the time when the ocean was churned and Lakṣmī came out of it. रोमाञ्च is common to the sentiments of love and heroism.

St. 39. The Mārkaṇḍeya Purāṇa says that Viṣṇu fought with Madhu and Kaiṭabha for five thousand years with His arms as the weapons, *cf.* stanzas 14 and 18 above.

St. 40. The Bhāgavata makes the keepers of the quarters identical with the arms of Nārāyaṇa. The Kṣatriyas are said to be born of His arms.

St. 41. The Bhāgavata says that the Lord is called Triyuga in-as-much as He appears disguised in Kali. The functions of yokes, *viz.* curbing the pride of unruly bulls and bearing the weight of the burdens on the cart, are here attributed to the arms.

St. 42. दोर्वृन्देन्दीवरस्रक्चयचरमचराम्भोजचातुर्यभाजाम्—the reference is to the practice of putting flowers of a different colour at the knots in wreaths, the palms of the hands being red. विधिनिटिललिपेरुत्क्रिराणाम्—the reference is to the belief that Brahmā inscribes the destiny of all beings on the forehead; here his own fate is said to have been put down by the four hands of Nārāyaṇa on as many foreheads.

St. 43. मुक्तीश्वतस्रः—Although five kinds of Mukti *viz.* residence in the same heaven, equality in rank, nearness, sameness in form, and union with the deity, are mentioned, the last one is ignored as it is disliked by devotees. पुमर्थापणिकाविपणयः—the four pursuits of men are piety, wealth, desire and freedom. बद्धमुष्टित्वम्—it is to be taken here literally.

St. 44. Here Nārāyaṇa's fingers are portrayed as shoots of the Wishing-tree ( कल्पद्रु ), the nails as the tender leaves, the rings as the watering basins, and the rays of the gems as the waters in them. The commentator says that their number is determined by the five kinds of desires of the devotees, *viz.* the four pursuits and devotion ( Bhakti ).

St. 45. The four hand-equipments of Viṣṇu are described in this and the following nine verses. A conch-shaped neck (*i. e.* a neck marked with three lines like a shell ).

St. 46. वाहिनी has two meanings, river and army.

St. 47. ज्वालाजिह्वासहस्रै :—by means of thousands of flamy tongues —the flame-like brilliant rays of the discus. कलसजनि=अगस्त्य. The pitcher-born is the sage Agastya, son of Mitra and Varuṇa said to have been born in a pitcher instead of the mother's womb. He is reputed to have sipped the ocean in order to help the destruction of the demons.

St. 48. गार्भिणभ्रूणहत्या:—The killing of an embryo is considered one of the greatest sins and requires atonement. Having often done it with the vehemence of its sound, the conch appears to be undergoing penance as one can judge from the inhalation of air (as in prāṇāyāma) and the muttering sounds. Practice of prāṇayāma and utterance of Oṁ are said to be able to wipe off all sins.

St. 49. As Nārāyaṇa blows the conch, His breath carries the fragrance of His mouth and the sweet moisture of the lips. Being so highly favoured by the Master it may well laugh at the ways and looks of the mace Kaumodakī.

St. 51. The super-excellent beauty of Nārāyaṇa, fancied as a lotus, is represented as due to the forfeiture of the excellences of all other lotuses and the constant oozing of honey in the lotus held in His hand is fancied as shedding tears out of helpless fear. The seizure by the hand, too, is pictured as reassurance by a friendly kinsman.

St. 52. The same seizure by the hand, fancied as a friendly embrace in the last verse, is here pictured as a deadly grasp out of rivalry. The bees that are attracted by the sweetness of the lotus are playfully treated as grateful servants bemoaning the fate of their lord.

St. 53. The movements of the mace in the battle together with the accompanying sounds and disfigurements are fancied as the behaviours of one mad with drinking. The Lord of the dead is Yama who would be pleased to see the ghastly activities of the mace like those of one of his ghostly agents.

St. 54. The real achievements of the mace, *viz.* smashing formidable enemies and bursting open the prominences of the elephants, as directed, and thereafter returning to the hand and inducing tears in the eyes of the enemies' wives, as a consequence, are here, by means of secondary meanings, represented as violating the religious code by eating beef and drinking wine from the Caṇḍāla's pitcher and therefore undergoing expiatory injunctions such as bathing in the Ganges and living on milk.

St. 55. For the marks on the neck *cf.* stanza 45. The

